3.2

# व्याकरणशास्त्रदृष्टया जातिस्वरूपविमर्शः



—डा॰ राधेश्याम मिश्रः

# व्याकरणशास्त्रदृष्ट्या जातिस्वरूपविमर्शः

वाराणसेयसंस्कृतविश्वविद्यालये प्रस्तुतः, स्वीकृतश्च शोधप्रबन्धः

ग्रन्थरूपेण प्रकाशितः ।

लेखक :

डॉ० राधेश्याममिश्रः,

व्याकरणाचार्यः, लब्धस्वर्णपदकः, धर्मशास्त्राचार्यः, पुराणाचार्यः,

विद्यावारिधिः [ पी-एच्० डी० ] व्याकरण-प्राध्यापकः

श्रीशिवसंकटहरणादर्शसंस्कृतमहाविद्यालयः

सकाहा, हरदोई ( उत्तर-प्रदेश )

संवत् २०२७ वि०

प्रकाशक:

**डॉ० राधेश्याममिश्रः**

ग्रा० पो० खजुरहरा,

जि० हरदोई

उत्तर-प्रदेशः

मूल्यम् : रू० ५) पञ्चरूप्यकाणि

प्रथमावृत्तिः, : १००० प्रतयः

मुद्रकः

सुधीरकुमार चतुर्वेदी

सुदर्शन-मुद्रकः,

४२, उत्तर बेनिया बागस्थः

काश्याम्

भारतीयशासनान्तर्गत-शिक्षा-मन्त्रालय-द्वारा
प्रदत्तेनार्थिकसाहाय्येन मुद्रिता प्रकाशिता च ॥

# शुभाशंसाः

—: शुभा सम्मतिः :—

'व्याकरणशास्त्रदृष्ट्या जातिस्वरूपविमर्शः' इत्ययं निबन्धः श्रीराधेश्याम-मिश्रेण निबद्धो मया सम्यग्दृष्टः। अयं निबन्धो व्याकरणस्याकरग्रन्थान् महाभाष्य-वाक्यपदीयादीन् आधारीकृत्य विनिर्मितोऽपि आधुनिकीं लोकदृष्टिमपि नातिका-मति। तथा हि अस्मिन् ग्रन्थे बहवो जातिभेदाः प्रदर्शिताः। शास्त्रीयाः, लौकिकाः, शास्त्रे लोके च उभयत्र प्रसिद्धा इति। अत्र शास्त्रीया जातयः—गोत्रं चरणानि च औपगवबह्वृचकठादिकाः। लौकिक्यः—अश्वत्वगजत्वघटत्वादयः, उभयत्र प्रसिद्धा ब्राह्मणत्वक्षत्रियत्वादयः। याश्च जातयो यत्र प्रसिद्धास्तत्रत्यान् व्यवहारान् ता एव निर्वोढुमीशते इति तत्र तत्रोपयोगस्तासाम्। काश्चिच्च जातयो लोके सकेतमनुसृत्य प्रवृत्तादेशसंबन्धमाश्रित्य ताश्चात्यन्तमाधुनिक्यः यथा अमेरिकन–जर्मन आदि जातयः। प्राचीनाश्चावान्तरजातयस्तत्र विलोप-मागताः। सर्वासाञ्च जातीनां लोके उपयोगः—व्यवहारः, परस्परं स्नेहः, देशकार्ये जातिकार्ये च समुत्साहः, शाब्दे व्यवहारे लाघवञ्चेति। काश्चिच्च जातयः प्राचीना अर्वाचीना वा धर्मनिबन्धनाः यथा—हिन्दवः, यवनाः, बौद्धाः, क्रिश्चियन इत्याख्याश्च एवमादयः। जातिः खलु स्नेह, संघटन, साहाय्य, समृद्धि, देशविजय, समुत्साह, विधा, विभवादीनां सर्वेषां साधनमिति विमृश्य तस्या-विमर्शनपरोऽयं ग्रन्थ उपादेय इत्यहं मन्ये।

**रघुनाथ शर्मा**

६–१२–७०

मातृसदन--
छात्रा—बलिया

# 'शुभा सम्मतिः'

"श्रीहरिः शरणम्"

वाराणसेयसंस्कृतविश्वविद्यालयीयं "विद्यावारिधिनामानमुपाधिमधिकर्तुं" "व्याकरणशास्त्रदृष्ट्या जातिस्वरूपविमर्शः" इति विषयमादायायुष्मता विदुषा श्रीराधेश्याममिश्रेणालिखितो निबन्धो मया दृष्टः।

जातिविषये त्वस्मिन् कराले काले भूयान् विवादः प्रचलन्नस्ति। यथा जातिर्नाम नहि कश्चन नित्यः पदार्थः, अपि तु गुणकर्मभ्यां सम्पाद्योऽनित्यो विनाशी च, अतएव बहवो ब्राह्मणादयो म्लेच्छेषु मेलिता एतैराधुनिकैः। अस्माकं दर्शने तु ब्राह्मणत्वादि जातयो नित्याः, गुणकर्माणि च जात्याश्रय-व्यक्तीनामुत्कर्षापकर्षकारकाः। यथा अश्वः स्वजात्युचितकर्माभावे यानार्हो न भवति इत्यपकर्षस्तस्य तेन हेतुना, नतु तस्याश्वत्वमेव व्यपगच्छति। अतश्चाभक्ष्यभक्षणेन यावनादिसम्प्रदायानुगतनियमपालनेन च ब्राह्मणस्य ब्राह्मणत्वं न हीयते, अपि तु तदाश्रयव्यक्तेरपकर्षो भवति पूज्यत्वपात्रत्वा-भावादिरूपः।

अत्र निबन्धे भूयसा परिश्रमेण इमेऽपि लोकोपयोगिनो विषयाः सप्रमाण-मुल्लिखिता इति प्रथमं प्राशस्त्यम्। मुनित्रयसम्मतं जातिस्वरूपं तु "आकृति-ग्रहणा जातिर्लिङ्गानां च न सर्वभाक्" इत्यादिना सुष्ठु प्रदर्शितमिति द्वितीयं प्राशस्त्यम्। किं च कुत्र कुत्र सूत्रे वार्तिके महाभाष्ये च जातिसंकीर्तनं तत्तदा-चार्येण कस्मिन्नर्थे कृतमस्ति? इत्येतत् सर्वं संकलय्य दर्शनं मन्ये व्याकरण-शास्त्रस्यैतदंशे हृदयदर्शनमेव कारितमनेन मिश्रमहोदयेन इत्यपरं तृतीयं प्राशस्त्यम्।

व्याकरणशास्त्रदृष्ट्या लिख्यमाने चात्र निबन्धे द्वितीय तृतीयप्राशस्त्य-विषयजातमेव मुख्यमुद्देश्यम्, प्रथमं तु प्रासङ्गिकम् लोकदृष्ट्या तदपि प्रधानभूत-मित्यन्यत्।

अपरं चात्र निबन्धे—१. जातावपि जातिः।

२. ब्रह्मरूपा जातिः एका बिम्बी च।

३. जातिव्यञ्जकास्त्रयः (१) स्वाश्रयगतासाधारणो गुणः, (२) अवयव संस्थानम् (३) उपदेशश्चेति।

४. व्यक्तेरभेदस्तुल्यत्वमित्यादयो जातिबाधकाः।

५. जातिविषये आधुनिकानां मतम्।

६. प्राचीनदृष्ट्या तन्निरासः इत्येवमादयो भूयांसो विषया विशेषतो द्रष्टव्याः सन्ति।

किं च सर्वलोकोपकारकः जातिर्जन्मना न गुणकर्मभ्याम्, इत्ययं विषयः प्रतिपदं पठनीयः। सप्रमाणं प्रयत्नसम्पादितस्यास्य निबन्धस्य सर्वतोभावेन सर्वत्र प्रचारो भूयात् इति भगवतो विश्वेश्वरादाशासानो मिश्रमहोदयं शुभाशीर्भि-र्योजयन् तदीयामभिवृद्धिं सततं कामयते—

**रामप्रसाद त्रिपाठी**

२०।१२।७० प्राचीनव्याकरणदर्शनागमविभागाध्यक्षः

वाराणसेयसंस्कृतविश्वविद्यालयवाराणसीस्थः

# अभिशंसनम्

व्याकरणाचार्य-विद्यावारिधिः (पीएच्० डी०) इति विशिष्टोपाधिभ्यां मण्डितेन डा० राधेश्याममिश्रेण निर्मितं शोधप्रबन्धमिमहं विलोक्य नितरां प्रसीदति ममान्तरात्मा। 'व्याकरणशास्त्रदृष्ट्या जातिस्वरूपविमर्शः' इति नाम्ना प्रख्याते नानाशास्त्रीयप्रमाणप्रचुरेऽस्मिन् शोधप्रबन्धे व्याकरणेतर-शास्त्रेषु जातिस्वरूपं प्रतिपाद्य युक्तिभिः खण्डयित्वा च व्याकरणशास्त्रसम्मतं स्वरूपं सिद्धान्तकोटौ प्रविष्टं नानातर्कोपन्यासमण्डितं रुचिरया भाषया प्रतिपादयति ग्रन्थकारः। ग्रन्थोऽयं जातिस्वरूपं जिज्ञासमानानां छात्राणां विपश्चितां च भृशमुपकाराय कल्पते इति प्रमाणयति।

**बलदेव उपाध्यायः**

प्राप्तावकाश-सञ्चालकः
अनुसन्धानसंस्थानस्य
वाराणसेय संस्कृत विश्वविद्यालयस्य

१–१२–७०
मार्गशीर्ष शुक्ल तृतीया, वाराणसी

वाराणसेयसंस्कृतविश्वविद्यालये अनुसन्धानसञ्चालकमहोदयानां न्यायवेदान्ताद्यनेकशास्त्रपारदृश्वनां परममाननीय—

## पण्डितप्रवरश्रीबदरीनाथशुक्लमहाभागानां

### शुभा सम्मतिः

पं० श्रीराधेश्याममिश्रेण लिखितो "व्याकरणशास्त्रदृष्ट्या जातिस्वरूप-विमर्श"—नामा निबन्धो मया सादरमवलोकितः। एष निबन्धः श्रीमिश्रेण "वाराणसेयसंस्कृतविश्वविद्यालयस्य" विद्यावारिधि (पी–एच्० डी०) नाम्नोऽनुसन्धानोपाधेः प्राप्तये प्रणीतः। तदाश्रयेण च १९६७ ख्रिष्टाब्दे विश्वविद्यालयस्य दीक्षान्तमहोत्सवे उपाधिरयं तेन सोत्साहमुपलब्धः।

एतस्य निबन्धस्य मुद्रणप्रकाशने संकल्पिते परिज्ञाय अहममन्दमानन्दमनुविन्दामि। यतो ह्यस्मिन् निबन्धे विमृष्टा विवेचिता विस्तरेण निरूपिता च जातिः शास्त्रदृष्ट्या च निरतिशयमहत्वपूर्णा।

जातिर्हि प्राधान्येन कारणतायाः, कार्यतायाः पदवाच्यतायाः अनुगतप्रतीति-विषयतायाश्च अवच्छेदकतया अभ्युपगम्यते। सा च द्विविधा नित्यमात्रवृत्तिः

अनित्यमात्रवृत्तिश्च, आद्या आत्मत्वादिरूपा द्वितीया द्विविधा नित्यमात्रवृत्तिः नित्यानित्योभयवृत्तिश्च। तयोः आद्या घटत्वादिरूपा। द्वितीया पृथिवीत्वादिरूपा। अनित्येषु आश्रयेषु जातेः सम्बन्धः आश्रयोत्पादक-सामग्री प्रयोज्यः। यथा—दण्डचक्रचीवरः कुलालकपालादि घटिता घटसामग्री स्वोत्पाद्यमाने घटे घटत्वजातेः सम्बन्धमादधाति। नित्यैः आश्रयैः जाति-सम्बन्धः स्वाभाविकः यथा—परमाणुभिः पृथिवीत्वादेः। आत्मादिभिश्च आत्मत्वादेः।

जातिः कालतो देशतश्च व्यापिका, सर्वा जातयः सर्वेषु कालेषु कालिक-विशेषणतासम्बन्धेन सर्वेषु देशेषु च दैशिक विशेषणता सम्बन्धेन तिष्ठन्ति। अतः क्वापि देशे क्वापि च काले विद्यमानाः व्यक्तयः जातिभिः सम्बध्यन्ते। तत्तज्जातीयताव्यवहारस्तु मतभेदेन तत्तज्जातीनां समवायस्य तादात्म्यस्य वा सम्बन्धस्य अधीना, अतस्तासां कालदेशकृतविशेषणताभ्यां सर्वदेशकालेषु वृत्तित्वेऽपि तेषु न तत्तज्जातीयताव्यवहारः।

काश्चन जातयः साङ्कर्यपरिहारप्रयोजनकतयाऽपि कासु चिद् व्यक्तिषु अभ्युपगम्यन्ते। यथा—परमाणुरूपादिषु रूपत्वादिजातयः। तत्र तदकल्पने गुणत्वेन साङ्कर्यप्रसङ्गस्य अपरिहार्यत्वात्।

येषु शास्त्रेषु वैशेषिकादिवत् नित्यत्वे सत्यनेकसमवेतत्वलक्षणाश्लिष्टाः जातयो न मन्यन्ते। येषु च जातिबाधकानां व्यक्तिभेदतुल्यत्वसाङ्कर्यानवस्था रूपहानिसम्बन्धाभावानां समादरो नास्ति तेष्वपि केषुचिद् उपाधिरूपाः केषुचिच्च अपोहरूपा अभ्युपेयन्त एव ताः। इत्येवं तासां महत्त्वस्य निरतिशयतया प्रस्तुते निबन्धे ता अधिकृत्य विदुषः प्रामाणिकश्च विमर्शः कृत आस्ते।

विभिन्नशास्त्रेषु उपलभ्यमानान् जातिविषयकविचारान् निपुणमालोच्य व्याकरणशास्त्रदृष्ट्या तत्सम्बन्धे विस्तृतो विशदश्च विचारो निबन्धेऽस्मिन् विहितो विद्यते।

जातीनां लक्षणमभिव्यक्तिसाधनं वैविध्यं विभिन्नप्रयोजनकत्वञ्च सम्यगत्र निरूपितमास्ते। मन्ये जातिविषये विशेषजिज्ञासूनां विदुषां विद्यार्थिनाञ्च महान्तमुपकारमाचरन्नयं निबन्धो लेखकस्य यशोवृद्धिसाधनतां विद्वत्समाजे चिरमाद्रियमाणतां च नूनं लभेत।

बदरीनाथशुक्लः

२-१२-७०

# शुभकामना

डाँ० आचार्य पं० देवदत्तशर्मोपाध्यायः, एम० ए० ( सं० हि० ) ( पी—एच० डी० ) विद्याभास्करः, आयुर्वेदभास्करः, प्राचीन—व्याकरणाचार्यः, नवीन व्याकरणाचार्यः, वेदान्ताचार्यः, पोस्टाचार्यः, सांख्ययोगतीर्थः, भू० पू० वाराणसेयसंस्कृतविश्वविद्यालयीय प्राचीनव्याकरणदर्शनागमविभागाध्यक्षस्य ।

लब्धसुवर्णपदक—विद्यावारिधि—( पी—एच० डी० ) व्याकरणाचार्य—धर्मशास्त्राद्याचार्यपुराणाचार्यपदव्यलङ्कृताहरदोई - मण्डलान्तर्गत - खजुरहराग्राम-वास्तव्य पं० श्रीकुञ्जनलालमिश्रात्मज श्रीशिवसंकटहरणादर्शसंस्कृत-महाविद्यालयस्य व्याकरण—प्राध्यापक - डाँ० श्रीराधेश्याममिश्रसुरचित "व्याकरणशास्त्रदृष्ट्या जातिस्वरूपविमर्शः" इत्येतन्नामकोऽयं ग्रन्थो जातिविषयकसमस्तसम्बधसंबद्धसकलसंस्कृतसाधुग्रन्थसुसन्दर्भसारभागसंवलितः संस्कृतसरस्वतीविभूषितानां विदुषां चेतसि कमपि कमनीयमद्भुतमश्रुतपूर्वं चमत्कारमाविष्करोति सम्प्रति, इत्यतिरोहितमेव समेषां विद्वज्जनवृन्दवन्दित-चरणयुगलानां तत्र भवतां प्रकाण्डपण्डितप्रवराणाम् । मन्ये सद्य एव संस्कृत पिपठिषूणां छात्राणामपि च विद्या - विवेक - वारिविशुद्धान्तः-करणानामध्यापकानां मननशीलानां महात्मनां साधारणानाञ्च जगती जनानां महते मनो मोदाय समुत्सवाय कल्याणाय समुपकाराय च भविष्यति, अहमस्य सदैवाभ्युदयं कामये । इति सूचयति—

देवदत्त शर्मोपाध्यायः
२।१२।७०

वाराणसेयसंस्कृतविश्वविद्यालयीय भूतपूर्वसाहित्यविभागाध्यक्षाणां
पं० श्रीरामकुबेरमालवीयानां
शुभाशंसा

## "व्याकरणशास्त्रदृष्ट्या जातिस्वरूपविमर्शः"

निबन्धोऽयं पं० राधेश्याममिश्रव्याकरणाचार्यसंदृब्धोऽतिनैपुण्यं विषये संप्रकटयन्नव्यां रीतिं समुल्लासयन् विद्वद्वरेण्यानां मनांस्यावर्जयतु नितरामिति शुभाशंसा भवतु चन्द्रमौलेः कृपया ।

रामकुबेरमालवीय।नाम्
३०।११।७०

हरदोई मण्डलान्तर्गत सकाहाग्रामस्थ श्रीशिवसङ्कटहरणादर्शसंस्कृतमहाविद्यालयीय प्रधानाचार्याणां साहित्यादर्शनाद्यनेकशास्त्रपारङ्गतानां साहित्यरत्न-साहित्याचार्य-दर्शनाचार्योपाधिभाजां श्रीमतां —

### यशवन्तसिंहचौहानमहाभागानां
### शुभाशंसनम्

वाराणसेय-संस्कृत-विश्वविद्यालयस्य "विद्यावारिधिः (पी-एच० डी) इत्युपाधेय" व्याकरण-शास्त्र-दृष्ट्या जातिस्वरूपविमर्शाख्यं विषयमधिकृत्य श्री पण्डितराधेश्याममिश्रैः संदृब्धोऽयं शोध-प्रबन्धः परिदृष्टो मया स्थालीपुलाकन्यायेन। सति प्रसङ्गेऽत्रजाति-स्वरूप-साधकरूपाणि व्याकरण-शास्त्रातिरिक्त-वेदशास्त्राणामपि प्रमाणानि दीयमानानि नितरां समुल्लसन्तीति भृशं मे तोष-कारणम्।

व्याकरण-विषयेऽपि भाषायाः सारल्यं प्रवाहश्चात्र शोध-प्रबन्धे सर्वत्र परिलक्ष्येते। एतावता श्रीमिश्रमहोदयानां विविधविषयाध्ययन-जन्य प्रबन्ध-प्रणयन-पाटवं द्योतमानो भाव-पूर्णोऽयं प्रबन्धः प्रसन्नगिरा गम्भीर-विचारान् वितरन् स्वाध्यायपरायणानां जिज्ञासु-पाठकानाममन्दमोदाय—प्रभवेदिति बहुशः कामयते।

यशवन्तसिंहः चौहानः
२७।११।७०
प्रधानाचार्यः
श्रीशिवसङ्कटहरणादर्शसंस्कृतमहाविद्यालयः
सकाहा (हरदोई)

## सदाशंसा

डॉ० राधेश्याममिश्रमहोदयैर्ग्रंथितः व्याकरणशास्त्रदृष्ट्या जातिस्वरूपविमर्श-नामकोऽयं ग्रन्थः मया सम्यगवलोकितः। अस्मिन्वैदुष्यभावनिबद्धे ग्रन्थे विभिन्न-भारतीयदर्शनमतानुसारेण आधुनिकानां महानुसारेण च विषयश्च सुप्रौढा सुस्पष्टा युक्तियुक्ता च मीमांसा कृताऽस्ति।

भगवता वासुदेवेन श्रीमद्भगवद्गीतायां भणितम—

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः,

न केवला मनुष्य-जातिः अपि तु गजाश्वादि पशवः, स्वर्णरजतादि धातवः, काष्ठा, ओषधयः, जलानि, स्वराः, मणयः, नक्षत्राणि, रत्नान्यपि ब्राह्मण क्षत्रिय-वैश्य-शूद्रजातिगतानि वर्णितानि सन्ति। पालिकाप्ये गजा अपि ब्राह्मण-क्षत्रिय-वैश्य-शूद्रजातीयाः वर्णिता। एवमेव शालिहोत्रेऽश्वाः, वृक्षायुर्वेदे काष्ठा ओषधयश्च, रत्न-शास्त्रे विविधरत्नानि, संगीत-शास्त्रे स्वराः रागाश्च, ज्योतिष-शास्त्रे नक्षत्राणि, धातुशास्त्रे सर्वे धातवः ब्राह्मण-क्षत्रिय-वैश्य-शूद्र जातिगताः वर्णिताः सन्ति। अतएव न केवला मानवजातिः अपितु सकलचराचरजगदेव चातुर्वर्ण्ये प्रतिष्ठितमस्ति। तेषां जातिभेदास्तु गुणानुसारि (सत्व-रजस्तमः स्वभावनुसारि) कर्मानुसारि (प्रभावानुसारि) च निरूपिताः।

व्याकरणशास्त्र-दृष्ट्या जातिस्वरूपविमर्शे विस्तरेण जाति-भेदविमर्शः कृतः। तस्मिन्नेवोपयुंदाहृताश्च भेदा अपि तद्विमर्शान्तर्भूता एव।

मन्येऽस्य ग्रन्थस्य समाज-शास्त्राध्येतारः वेत्तारश्च सूक्ष्मतयाऽध्ययनं कृत्वा स्वसमाजशास्त्रपरिज्ञानस्य परिष्कारं सम्पादयिष्यन्ति।

समतिशयसाधुवादार्हाः श्रीमद्राधेश्याममिश्रमहोदयाः ग्रन्थकृद्रूपेणेति।

पौष कृष्ण पंचमी,

शनिवासरः, सं० २०२७ —सीताराम चतुर्वेदः

काशी

## —प्राक्कथनम्—

अस्मिन् शोध-निबन्धे यैर्महानुभावैरल्पीयस्यपि सहायता व्यधायि, तेषामहमुपकृतिभारं नतेन शिरसा आवहामि।

तत्र सर्वं प्रथमतोऽहं तौ मातापितरौ हृदयेन नमस्कुर्वे, याभ्यामिदं पाञ्च-भौतिकं शरीरं समुत्पन्नम्। पुनश्च तान् गुरुवरान् तातपादं च मनसा मुहुर्मुहुःप्रणमामि, यैर्मम चिन्मयं शरीरं निर्मितम्। तदनु विशेषतो धन्यवादार्हा अत्र निबन्धलेखने ये सन्ति, तान् हृदयेन नमस्कुर्वन् निर्दिशामि।

व्याकरणे पतञ्जलि-कल्पाः भारतीयदर्शनेषु श्रीवाचस्पतिकल्पा अद्वितीय-प्रतिभासम्पन्ना महामनीषिणो मनस्वि-प्रवराः परमगुरुवराः श्रीरघुनाथशर्म-पाण्डेयमहोदयाः। एते मम सर्वस्वभूता गुरूणामपि गुरवः।

वाराणसेयसंस्कृतविद्वद्गौरवमूर्तयः भारतीयसंस्कृति-संरक्षकः वैयाकरण-मूर्धन्याः गुरुवराः श्रीरामप्रसादत्रिपाठिनः प्राचीनव्याकरणदर्शनागमविभागाध्यक्षाः वाराणसेयसंस्कृतविश्वविद्यालयीयाः। एते एवैतन्निबन्धे निर्देशकपदं स्वीकृत्य मां कृतार्थितवन्तः।

अप्रतिम-प्रतिभा-प्रतिभासमानसाः, स्वकीयसर्वतो मुखवैदुष्य-सम्पदास्मारित-चिरन्तनभारतीयसंस्कृतयः वाराणसेयसंस्कृतविश्वविद्यालयस्योपकुलपतिपदमलङ्कृत्य विश्वविद्यालयमेनं शिखरे समास्थापयन् ये, ते सन्ति श्री सुरतिनारायण-मणित्रिपाठिमहोदयाः। इमे एव मामेतत्कार्ये प्रोत्साहितवन्तो वृत्तिदानेन चानुगृहीतवन्तः।

सततं सुरभारतीनिषेवणतत्पराः प्राच्यप्रतीच्योभयविधविद्याविशारदाः परमदार्शनिकशिरोमणयः श्रीमन्तो बलदेवोपाध्यायमहाभागाः। इमे एवानु-सन्धानसंचालकपदमलङ्कुर्वन्तस्तस्मिन् समये मां बहु उपकृतवन्तः।

न्यायवेदान्ताद्यनेकदर्शनेषु कृतबुद्धयः स्वीयातुलप्रतिभया भारतीयविद्या-दीक्षितान् विदुषोऽनायासेन सन्तोषयन्तः शास्त्रार्थकलायां किमप्यद्वितीयं वैशिष्ट्यं प्रकृत्या विदधतो वाराणसेयसंस्कृतविश्वविद्यालयीयानुसन्धानसंचालकपदं वर्तमानसमये कृतार्थयन्तो न्यायगुरवः श्रीबदरीनाथशुक्लमहानुभावाः। एते पदे पदे मां प्रोत्साहयन्ति।

वाराणसेयसंस्कृतविश्वविद्यालयउपकुलपतिपदमलङ्कुर्वन्तः प्राच्यप्रतीच्यो-भयविधदर्शनशास्त्रपारदृश्वानो विशेषतो वाक्यपदीये कृतभूरिपरिश्रमाः डॉ० श्री गौरीनाथशास्त्रिमहोदयाः। इमे मां भूयोभूयः समुत्साहितवन्तः।

भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा इति वचनं मनसा वचसा कर्मणा सार्थकयन्तः भारतसर्वकारस्य केन्द्रीयशिक्षाचक्रे समीचीनसम्मतिदाने बद्धपरिकराः अनेकभाषासु प्रख्यातमतयः पातञ्जलमहाभाष्यम् अगाधसमुद्रे निमज्जद्रत्नजातमिव विद्वज्जनसमक्षमानयन्तः विविधभाषावैदुष्यविभूषिताः शिक्षाकर्णधाराः श्रीमन्तः डा० परमेश्वरदीनशुक्लमहोदयाः कथं विस्मरणीयाः। इमे मया सनमस्कारं भूयसीभिर्धन्याख्याभिसत्क्रियन्ते।

भारतीयसंस्कृतिसंरक्षकाः शिक्षामन्त्रालये विशिष्टपदमलङ्कुर्वन्तः श्रीरामकरणशर्ममहोदयाः। इमे एव एतद् ग्रन्थसम्पादने मां भृशं नियोजितवन्तः।

अस्मद् गुरुवराः भूतपूर्वं प्राचीनव्याकरणादर्शनागमविभागाध्यक्षाः सकलशास्त्रापारङ्गताः श्रीमन्तो डॉ० देवदत्तशर्मोपाध्यायाः। इमे एव मां प्राचीनव्याकरणशास्त्रे दीक्षितवन्तः।

अस्मद् गुरवः व्याकरणशास्त्रेऽप्रतिमगतयः परमकृपालवः श्रीचन्द्रबलीद्विवेदिमहोदयाः सनमस्कारं धन्यतावचनैः सम्पूज्यन्ते। ये प्रतिपदं मां प्रोत्साहितवन्तः प्रोत्साहयन्ति च।

अथ च वैदिकधर्मानुष्ठाने साभिनिवेशं दत्तावधानाः वर्णाश्रमधर्ममर्यादया स्वजीवनस्य क्षणं-क्षणं यापयन्तः स्वकौटुम्बिकजनान् अन्यांश्चानुयायिनः वैदिकधर्मानुष्ठाने प्रेम्णा प्रेरयन्तः आँग्लभाषायामपि पारदृश्वानः वाक्येन पदव्या विभूषिता अद्यत्वेऽपि मण्डलस्थानेकान् वाक्कीलान् तत्सम्बद्धविधिविषयकमन्त्रणादानेन सनाथयन्तो ब्रह्मर्षिकल्पाः वाजपेयिनां प्रवराः पितृभूताः श्री रघुवरदयालमहामनीषिणः शतशः नमोऽञ्जलिपुरस्सरं धन्यवादैः समर्च्यन्ते। ये च सन्ति श्रीशिवसंकटहरणादर्शसंस्कृतमहाविद्यालयस्य प्राणभूताः मम च सर्वस्वम्।

स्वीयतपश्चर्यया ब्रह्मचर्यव्रतानुष्ठानेन च स्वयं पूतान्तःकरणः पवित्रीकृतभारतभुवः श्रीशिवसंकटहरणादर्शसंस्कृतमहाविद्यालयीयभूतपूर्वसंचालकमहानुभावाः ब्रह्मीभूत श्रीमत्परमानन्दब्रह्मचारिप्रवराः शतशः प्रणति-पुरस्सरं विशेषतो धन्यवादार्हाः। येषां महताऽनुग्रहेणायं जनः आबाल्यात् संस्कृताध्ययने पितृचरणानां सम्मत्या प्रवेशितः।

अस्मद् हितचिन्तकाः श्रीशिवसंकटहरणादर्शसंस्कृतमहाविद्यालयीय प्रबन्धकमहोदया वाक्कीलपदं विभूषयन्तः विपक्षीयवादिविदारणे सिंहशौर्यं प्रकटयन्तः संस्कृतविद्योत्थाने सततं प्रयतमानाः बहुमनोयोगेन कर्त्तव्यपरायणाः श्रीमन्तो जगन्नाथसिंहमहाभागाः कथन्न धन्यवादैः सत्क्रियेरन् ये सन्ति विद्यालयस्य हृदयम्।

पुनश्च संस्कृतसाहित्यशास्त्रे सुस्नाताः भारतीयदर्शनशास्त्रेषु कृतभूरिपरिश्रमाः भारतराष्ट्रसम्मानितहिन्दीभाषायां साहित्यरत्नोपाधिभाजः परमोदाराः दानशीलाः सहृदयाः क्षत्रियवंशावतंसाः श्रीशिवसंकटहरणादर्शसंस्कृतमहाविद्यालयस्य संचालने "क्षतात् किल त्रायत इति" कविकुलगुरोरुक्ति चरितार्थयन्तः उक्तविद्यालयस्य प्रधानाचार्यपदमलङ्कुर्वन्तः छात्रावस्थातोऽद्ययावत् मम सर्वस्वभूताः श्रीयशवन्तसिंचौहानमहाभागाः भूरिशो धन्यवादभाजः। इमेऽप्यस्मिन् कार्ये बहुसाहाय्यं कृतवन्तः।

सर्वान्ते तान् सुहृद्वरान् सोदरान् छात्रान् अन्यांश्च सहयोगिनो धन्यतावचनैः शुभाशीर्वचोभिश्च सततं सभाजयामि यैरस्मिनन्यस्मिंश्च कार्ये मम साहाय्यमण्व्याचरितवन्तः आचरन्ति च इति शम्।

३०।१२।७०

विदुषां वशंवदः

**डॉ० राधेश्याम मिश्रः**

# लघ्वी भूमिका

श्रीमद्रामप्रसादाख्यं गुरुं तद्गुरुमेव च।
रघुनाथपदं वन्दे बुधवन्द्यपदाम्बुजम् ॥ १ ॥
उपाध्यायं महात्मानं बलदेवं सुधीवरम्।
सर्वशास्त्रार्थवेत्तारं प्रणमामि पुनः पुनः ॥ २ ॥

अयं "व्याकरणशास्त्रदृष्ट्या जातिस्वरूपविमर्शः" नामा निबन्धः संस्कृत-साहित्यमहार्णवे सूक्तिरत्नानि विचित्य-विचित्य, विमृश्य-विमृश्य च वर्षद्वयेन महता श्रमेण भारतसर्दकारस्यकेन्द्रीयशिक्षामन्त्रालयद्वारा अनुसन्धानच्छात्रवृत्तिरूपं साहाय्यं लभमानेन मया निबद्धः।

अचिन्त्यानभावस्य भगवतः श्रीरामस्य अकारण-कारुण्य-प्रयुक्त-प्रसादादेव अस्मिन् कार्ये विद्वन्मूर्धन्याः मूर्तिमन्तः श्रीरामप्रसाद-त्रिपाठिनोऽन्वर्थनामानो मम निर्देशकाः।

जातिस्वरूपे च अस्मिन् कराले प्रवर्तमाने कलिकाले वहोः कालात् वहवो विवादाः प्रवृत्ता प्रवर्तन्ते च। जातिभ्रंशो भवति इति अभ्युपगमादेव पुरा ब्राह्मणादयो वर्णाः म्लेच्छैः स्वजातिपु स्वजातीरापाद्य मेलिताः।

अस्माकं दर्शने तु ब्राह्मणत्वादि जातीनां लक्षणप्रमाणाभ्यां नित्यत्वं व्यवस्थापितम्। जातिभ्रंशकारककर्मभिस्तु जातेः कर्माधिकारप्रयोजकत्वयोग्यता प्रतिहन्यते इत्येव भवति।

यथा—अश्वः क्वचित्कर्माभावे यानानर्हो भवति। न तु तस्य अश्वत्वं नश्यति, नित्यवात्। किञ्च हिन्दुत्वादिजातयः व्यवहारार्थं कल्पिताः। तासां च भ्रंशाभ्रंशौ व्यवहारादेव सिध्यतः। अतो न "कलमा" पाठेन हिन्दुत्वजातेः भ्रंशो भवति। अपकर्षस्तु भवत्येव इति सम्प्रतं व्यवहाराऽनुरोधेन कल्पनीयो मार्गं तथा च कल्पिता वा जातयः न स्वेच्छाकृतैर्बलात् कारितैर्वा रागद्वेषादि कृतैर्वा अपकर्मभिः प्रभ्रश्यन्ते किन्तु अपकृष्यन्ते इत्येव सिद्धान्तोऽत्र निबन्धे प्रदर्शितः। जातीनाञ्च सर्वासां नित्यत्वं, अनेकानुगतत्वञ्च, दर्शनेषु सिद्धान्तितम्।

जातीनाञ्च वर्गीकरणमत्र निबन्धे एवं कृतम् । एकैव सत्ताऽऽख्या ब्रह्मरूपा जातिर्व्यक्तिभेदैरुपहिता गोत्वादिभेदैर्बहुविधैरनेका व्यवह्रियते । जातेर्भेदद्वयम्—कल्पिता अकल्पिता चेति मम मतम् । जातेर्भेदत्रयम् । आकृतिग्रहणा जातिः । सकृदाख्यातनिर्ग्राह्या । गोत्ररूपा चेति वैयाकरणानां मतम् । अथ तत्तद् दर्शनेषु जातिविचारस्योपयोगः प्रदर्श्यते । तत्र न्यायवैशेषिकयोर्जाति-विचारस्योपयोग इत्थं बोध्यः । न्यायनये वैशेषिकनये समन्वयेन पदार्थाः द्रव्यगुणकर्म-सामान्यविशेष समवायाभावाः सप्तैव ।

तत्र सामान्यं [1]जातिरेव । पदार्थानां तत्त्वज्ञानादेव निःश्रेयसाधिगम इति गोतमकणदयोर्मतम् । इदं मतं समाश्रित्यैव सामान्यमेकत्वकरं विशेषस्तु पृथक्त्व-कृति इति वैद्याः । जातिश्च असाधारणधर्मत्वाल्लक्षणमपि संभवति । ततश्च व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनमिति जातेः प्रयोजनद्वयं सिध्यति ।

जातेश्च स्वाश्रयपदार्थतत्वज्ञाने चाधि-परमनिश्श्रेयससाधने उपयोगः इति विमृश्यापि गौतमीये औलूकीये च जातेर्विचारः कृतः । सांख्ये योगे च जातिर्न विचारिता । तत्त्वज्ञाने योगे वा तस्या अनुपयोगात् । त्रिगुणात्मकप्रकृतिपरिणाम-रूपत्वाभावाच्च ।

अनुगतप्रत्ययास्तु व्यक्तिसादृश्यादपि उपपद्यन्ते । अतएव सादृश्यमेव जाति-रिति केचित् । केचित्तु शक्तिरेव जातिरिति तदेतत्सर्वमस्मन्निबन्धे वाक्यपदीयोक्त युक्तिभिः साधितम् ।

मीमांसकास्तु आकृतिमेव जातिं मन्यन्ते । सादृश्येन अनुगतः आकार विशेष एव ( अवयवसंयोग-विशेष एव ) जातिरिति तेषां मतम् ।

अतएव आकृत्यधिकरणे आकृतिरेव पदार्थत्वेन निर्णीता । जातिशक्तिवाद-माश्रित्य जातेः प्रतिनिधिर्न भवति इत्यपि मीमांसानीतिमाश्रित्य अत्र निबन्धे निर्धारितम् । जातेश्च स्वाश्रयपरिच्छेदद्वारा योगसाधनत्वमित्यपि निर्धारितमिति ।

अद्वैतवादे तु सत्ताऽऽख्या एकैव जातिः अविद्यावशाद् बहुभिर्गोत्वादि-भेदैर्बहुधा विवर्तमाना लौकिक-वैदिक-कर्मसु व्यवहाराङ्गं भवतीति साधितम् ।

बौद्धास्तु नास्तिभावरूपा काचन जातिः । इतरभेदरूपः अपोह एव जाति-पदेन व्यह्रियते इति हि तेषां मतम् ।

व्याकरणे तु जातेर्बहुधा उपयोगो दर्शितः । अद्वैतसिद्धान्त एव च वाक्य-पदीयमनुसृत्य जातिविषये स्वीकृतः । सूत्रभाष्य-वार्तिककृताम् अभिप्रेता

---

१. ( चरक संहिता-सू० स्था० ४५ अ० १। चक्रपाणि-टीका सहिता) ।।इति।।

जातेरुपयोगाश्च अस्मिन् निबन्धे प्रायः साकल्येन प्रदर्शिताः। जातिर्जन्मना गुण-कर्मभ्यामेवेति संशयो द्वितीयाध्याये प्रारम्भे एव सुष्ठु निराकृतो द्रष्टव्यः।

सर्वशास्त्रपारिषदं हीदं व्याकरणशास्त्रमिति अभ्युपगम्य सर्वदर्शनानुरोधेन जातिवादाः व्यक्तिवादाश्च तत्तच्छब्दसिद्ध्यर्थं तत्र-तत्र व्याकरणे समाश्रिताः। एतन्निबन्धोपसंहारे च प्रायेण सर्वेऽपि निबन्धविषयाः संक्षिप्योपसंहृताः।

पञ्चमाध्याये षष्ठे प्रकरणे इत्येतन्निबन्धदिदृक्षुभिस्तत्प्रकरणमवश्यमेवा-लोकनीयम्।

एतस्य विषयसूचीसंदर्शननेनापि एतस्य निबन्धस्योपयोगो निर्ज्ञातो भविष्यति। तत्र-तत्र शास्त्रेषु च प्राचीनैर्विद्वद्भिः कृता निबन्धाः दृश्यन्ते। ते यथा-धर्मशास्त्रे "हेमाद्रिः" "कालमाधवम्" "वीरमित्रोदयः" "धर्मसिन्धुः" "निर्णयसिन्धुः," इत्यादयः व्याकरणे च "वैयाकरणसिद्धान्तमञ्जूषा" "वैयाकरणभूषणसारः" इत्यादयः। संदिग्धानां विषयाणां निश्चयेन बन्धो यत्र असौ निबन्ध इति च निबन्ध-पद-व्युत्पत्तिः सम्मता प्रचाम्।

एतामेव च व्युपत्तिमनुसृत्य सर्वोऽपि जातिविषयकः संदेहोऽत्र निराकृतः व्याकरणमतं स्वमतञ्चात्र जातिषियकसंदेहे निश्चयेन प्रदर्शितमिति महान् अस्य जातिविषयकस्य निबन्धस्योपयोगः।

इत्येवं वल्गु अवल्गु च मितं सारञ्च निगद्य प्राचीनं सूक्तद्वयं सतः संस्मारयन् विरमामि॥

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः।
हसन्ति दुर्जनास्तत्र समादधति सज्जनाः॥ १॥

तं सन्तः श्रोतुमर्हन्ति सदसद्व्यक्तिहेतवः।
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकाऽपि वा॥ २॥

—: भवो भवतु भव्याय :—

भावत्कः—

२०२७ तमे वैक्रमब्दे

डॉ० राधेश्याममिश्रः व्याकरणाचार्यः
(लब्धस्वर्ण-पदकः) विद्यावारिधिः
(पी-एच० डी०) धर्मशास्त्राचार्यः, पुराणाचार्यः, व्याकरण-प्राध्यापकः
श्रीशिवसंकटहरणादर्शसंस्कृतमहाविद्यालयः सकाहा, हरदोई

# बृहती भूमिका

व्याकरणशास्त्रदृष्ट्या जातिस्वरूपविमर्शः इति विषयमधिकृत्य लिखितेऽत्र निबन्धे वर्णिता विषयाः संक्षेपेण प्रदर्श्यन्ते—

तत्र प्रथमाध्याये—'व्याकरणशास्त्रदृष्ट्या जातिलक्षणम्' भाष्य-वार्तिककृतोर्दृष्ट्या जातिपदार्थस्य लक्षणं दर्शितम्। तथा हि—आकृतिग्रहणा जातिरिति वदता वार्तिककृता श्रीकात्यायनेन महर्षिणा अवयवसंस्थानव्यङ्ग्यत्वं जातेः प्रथमं लक्षणमुक्तम्। यथा सास्नादिमदवयवसंस्थानेन गोत्वजातेरभिव्यक्तिः, शाखापत्राद्यवयवानामारोह-परिणाहादिसंस्थानविशेषेण वृक्षत्वजातेरभिव्यक्तिः।

किन्त्वनेन लक्षणेन हस्तपादमुखनाभ्याद्यवयवसंस्थानव्यङ्ग्याया मनुष्यत्वजातेः संग्रहेऽपि ब्राह्मणत्वाद्यवान्तरजातीनां संग्रहो नैव सम्भवति, तासामवयवसंस्थानग्राह्यत्वासम्भवादित्यभिप्रेत्योक्तं पुनर्वार्तिककारेणैव–लिङ्गानां च न सर्वभाक्, सकृदाख्यातनिर्ग्राह्या इति। अयम्भावः—असर्वलिङ्गत्वे सति एकस्यां व्यक्तौ कथनाद् व्यक्त्यन्तरे कथनं विनाऽपि सुग्रहात्वरूपमिदं लक्षणमवगन्तव्यम्। यथा अयं देवदत्तो ब्राह्मण इत्याप्तवचनेन देवदत्तस्य ब्राह्मणत्वे ज्ञाते व्यक्त्यन्तरे तदीयोपितृपितामहादिषु कथनं विनाऽपि ब्राह्मणत्वं सुगृहीतं भवति। नहि अब्राह्मणस्यपुत्रो ब्राह्मणो भवति—इति पितृपितामहादिघटितायां तदीयोर्ध्वं परम्परायां ब्राह्मणत्वमनेन लक्षणेन निर्णेतुं शक्यते, न तु पुत्रपौत्राद्यधःपरम्परायामपि। सम्भवोऽस्ति यद् देवदत्तः शूद्रायां पुत्रमुत्पादयेत्, ततश्च स पुत्रः शूद्र एव भविष्यति न तु ब्राह्मणः, मातृवृत्तिजातेरेव तत्र स्मृत्यादिसम्मतत्वात्।

शूद्रत्वजातौ तु अधःपरम्परायामेव व्यक्त्यन्तरे तन्निश्चयः कर्तव्यः। यथा रामदासः कश्चन शूद्रः, तस्य पुत्रः शूद्रायामुत्पन्नः शिवदासोऽपि शूद्र एव न तु स क्षत्रियादि स्यात्।

ऊर्ध्वं परम्परायां तु शूद्रत्वं निर्णेतुं न शक्यते। यतो हि रामदासस्य पिता पितामहो वा शूद्र एवेति वक्तुं न शक्यते, अपितु ब्राह्मणादिरपि भवितुमर्हति। ततः शूद्रासम्बन्धेन रामदासः शूद्र उत्पन्नः इत्येवं रीत्या मनुष्यत्वव्याप्यब्राह्मणत्वादिजातीनां स्वतन्त्रं लक्षणमुक्तम्।

पुनश्च स्वशास्त्रमात्रोपयोगि आ तदेशिकं तृतीयं जातिलक्षण-मप्युक्तं तत्रैव—'गोत्रं च चरणैः सह' इति। अपत्यप्रत्ययान्तस्य शाखाध्येतृवाचिनश्च जातिप्रयुक्तकार्यलाभाय जातिवाचकत्वं मन्तव्य-मिति तदाशयः, यथा औपगवी कठी इत्यादि। अत्र गोत्रपदेन 'अपत्यं पौत्रप्रभृति गोत्रम्,' इति पारिभाषिकमेव गोत्रापत्यं गृहीत्वा इतर-दपत्यद्वयंव्यावर्तितवन्तः श्री नागेशभट्टाः। तद्विषयिणी युक्तायुक्तत्व-समीक्षा निबन्धे द्रष्टव्या।

एवमेव—'आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक्, सकृदाख्यातनिर्ग्राह्या' इत्येकमेव जातिलक्षणं महता संरम्भेण व्याख्यातं श्रीनागेशभट्टपादैः लघुशब्देन्दुशेखरे तद्विषयेऽपि युक्तायुक्तत्वसमीक्षा मया अवधानेन कृता द्रष्टव्या सुधीभिः सहृदयैः।

## न्यायशास्त्रदृष्ट्या जातिलक्षणम्

व्याकरणशास्त्रोपयोगि जातिलक्षणमुक्त्वा न्यायशास्त्रीयं जातिलक्षण-मुच्यते। यतश्च द्वयोरनयोः कियत्यंशे साम्यं वैषम्यं वा इति निर्णयेत्।

तत्र च समानप्रसवात्मिका जातिरिति सूत्रयता महर्षिगोतमेन जातेर्लक्षणं सुष्ठु प्रादर्शि।

समानः समानाकारः प्रसवो बुद्धिजननमात्मा स्वरूपं यस्याः सा इति विग्रहेण घटोऽयं घटोऽयमिति समानाकारा या। लौकिक-प्रत्यक्षात्मिका बुद्धिस्तत्र विषयविधया जातेर्हेतुत्वसम्भवेन लौकिक-प्रत्यक्षविषयमात्रसमवेतत्वं जातेर्लक्षणं सम्पद्यते। तत्र घटत्वादि-धर्माणां नित्यत्वे सत्येव तादृशबुद्धिजनत्वं सम्भवति न त्वनित्यत्वे।

तथा हि—घटादिगताः तद्व्यक्तित्वादि धर्माः प्रति घटं भिन्ना अनित्याश्च। ते कथं सर्वेषु घटेषु अनुगताः स्युः, अतोऽननुगतानां तद्व्यक्तित्वादिधर्माणां तादृशबुद्धिजनकत्वं नैव सम्भवति। सर्वघटानुगतानां नित्यानामेवघटत्वादिधर्माणां तु तज्जनकत्वसम्भवेन नित्यत्वे सत्यनेकसमवेतत्वं जातिसामान्यलक्षणं पर्यवसन्नम्।

समानाकारबुद्धिजननयोग्यत्वं तु स्वरूपपरिचायकमेव न तु लक्षणशरीरे निविष्टम्, एतत्सर्वं न्यायसूत्रविवरणरीत्या निबन्धे स्पष्टीकृतमस्ति। संयोगादिध्वस्य लक्षणस्यातिव्याप्तिवारणाय सत्यन्तदलम्। आकाशपरिमाणादिषु अतिव्याप्तिनिरासाय अनेकेतिपदम्। अत्यन्ताभावादावतिव्याप्तिनिराकरणाय वृत्तित्वसामान्यं विहाय समवायसम्बन्धेन वृत्तिमत्त्वरूपं समवेतत्वमुक्तम्। एवं च 'नित्यत्वसमानाधिकरणानेकनिरूपितसमवायसम्बन्धाऽवच्छिन्नवृत्तिताश्रयत्वम्, इति सामान्यलक्षणं प्रतिफलितम्।

## वैशेषिकसम्मतं जातिलक्षणम्

अनेकवृत्तित्वे सति यद् एकद्विबहुषु आत्मस्वरूपाऽनुगमप्रत्ययकारणं तत्सामान्यमिति लक्षणं वैशेषिकदर्शनसम्मतम्। अत्र लक्षणे मूलभूतं भाष्यवाक्यमपि तत्र प्रदर्शितमस्ति। परापरभेदेन च जातिद्विविधा। सत्ता जातिः परा, तदपेक्षया द्रव्यत्वगुणत्वकर्मत्वजातयोऽपराः। एवमेव पृथिवीत्वजलत्वघटत्वपटत्वादीनामपि आपेक्षिकं परापरत्वं व्यवस्थापितमेतन्नये।

## द्रव्यत्वजातिज्ञानोपायः

ननु सुवर्णरजतादिषु द्रव्यत्वप्रत्ययस्य लोकसम्मतत्वेऽपि घृतजतुप्रभृतिषु सार्वजनीनो द्रव्यत्वप्रत्ययो नोदेतुमर्हति, पामराणां तत्र द्रव्यत्वबुद्धेरभावादिति चेत्, उच्यते—समवायसम्बन्धेन कार्यं प्रति तादात्म्येन द्रव्यं कारणमिति कार्यकारणभावेऽन्वयव्यतिरेकसहचार-

गृहीते सति द्रव्यनिष्ठा या कारणता सा यत्किञ्चिद्धर्माऽवच्छिन्ना कारणतात्वात् या या कारणता सा सा यत्किञ्चिद्धर्माऽवच्छिन्ना, घटनिष्ठकार्यतानिरूपितकपालनिष्ठकारणतावत् ; इत्यनुमानेन द्रव्यनिष्ठ कारणतायां किञ्चिद्धर्माऽवच्छिन्नत्वसिद्धौ तादृशकारणता समनियतोऽन्यूनानतिप्रसक्तो धर्मः द्रव्यत्वरूप एव तादृशो भवितुमर्हति ।

तत्र धर्मे च जाति लक्षणस्य सङ्गमनात् जातित्वप्रतिवन्धकदोषाणामभावाच्च जातित्वं पर्यवस्यति ।

'अस्य लक्षणस्य शाब्दिकलक्षणेन सह तुलना, न्यायदार्शनीयमेतल्लक्षणं विभिन्नकालिकानेकसमवेतेष्वपि नित्यधर्मेषु अनुगतमस्ति । यथा नरसिंहत्वधर्मे । स हि अनेककल्पीयावतारभूतेषु नरसिंहशरीरेषु वर्तते ।

व्याकरणदर्शने तु वैयाकरणशिरोमणिना श्रीनागेशभट्टपादेन तु समानकालिकानेकसमवेतधर्मस्यैव जातित्वं सम्मन्यते । अतः नरसिंहत्वम्, चैत्रत्वम्, मैत्रत्वम्, देवदत्तत्वादिकं धर्मंजातित्वेन नाभ्युपयन्ति शाब्दिकाः ।

अतएव च चैत्रत्वविशिष्टा इति विग्रहे चैत्रशब्दात् 'जातेरस्त्री,' इति ङीष् न भवति ।

एवं च लक्षणेऽनेकसमवेतत्वमित्यत्रानेकपदं समानकालिकानेकपरमिति बोध्यम् । 'आकृतिग्रहणा जातिः' इति वार्तिककारीयं लक्षणं तु 'आकृतिर्जातिलिङ्गाख्या,' इति न्यायसूत्रोक्तलक्षणेन समानमेव ।

इदं च न्यायसूत्रीयं लक्षणं 'सकृदाख्यातनिर्ग्राह्या,' इत्यंशस्याऽपि प्रतिनिध्यं विदधाति ।

## पूर्वमीमांसानये जातिस्वरूपम्

जातिर्व्यक्तिगता नित्या प्रत्यक्षज्ञानगोचरा ।
भिन्नाऽभिन्ना न सा व्यक्तेः कुमारिलमते मता ॥

इत्येवं लक्षणा जातिर्भट्टपादसम्मता। इदमपि लक्षणं नित्यमेकमनेकानुगतं सामान्यमिति पूर्वोक्तलक्षणेन तुल्यमेव। तथा हि प्रागुक्ते श्लोके नित्या इत्यनेन जातेर्नित्यत्वमङ्गीकृतमेव। एकत्वं तु प्रत्यक्षज्ञानगोचरा इत्यनेन लभ्यते। यतश्च घटोऽयं घटोऽयमित्यनुगतैकाकारप्रत्यक्षेषु जातिरेका विषयीक्रियमाणा अस्ति।

सर्वं व्यक्तिष्वनुगतात् प्रत्यक्षादेव अनेकानुगतत्वमपि सिद्धमेव। इयान् परं विशेषः—गौतमीयैर्जातिव्यक्त्योः समवायसम्बन्धोऽङ्गीक्रियते, मीमांसकैस्तु तादात्म्यमिति।

प्राभाकरमते तु आकृतिग्रहणानां घटत्वपटत्ववृक्षत्वादीनां जातित्वसिद्धावपि सत्त्वशब्दत्वब्राह्मणत्वादीनां जातित्वं नाभ्युपेयते इति विशेषः।

तादात्म्यं चैतद् भेदाभेदरूपम्, उक्तं च 'भिन्नाऽभिन्ना च सा व्यक्तेः, इति। जातिव्यक्त्योः सामानाधिकरण्यप्रत्ययात् इदं तादात्म्यं सिध्यति। स च प्रत्ययः घटोऽयं घटोऽयमित्यादिः।

अत्रेदं पदेन व्यक्तेर्निर्देशः, घटपदेन जातिनिर्देशः, अत्यन्तभेदे गौरश्व इत्यादौ अत्यन्ताभेदे घटो घट इत्यादौ सामानाधिकरण्यप्रत्ययाभावात् अत्र जातिव्यक्त्योः भेदाभेदरूपं तादात्म्यं स्वीक्रियते।

'निरसनीय दृष्ट्या बौद्धसम्मतं जातिस्वरूपम्, बौद्धानां मते उक्तलक्षणा जातिर्न सम्मन्यते। तथा हि—जातिर्यद्यस्ति कश्चन भाव पदार्थः, तदा सा विभुत्वेन सकलपदार्थसम्बद्धा, स्वाश्रयव्यक्तिमात्रसम्बद्धा वा। नाद्यः, सर्वस्मिन् पदार्थे गोत्वादिजातेः सत्त्वेन सर्वत्र गवादिबुद्धिप्रसंगात्।

यदि तु परिच्छिन्नाऽतएव अनित्या च जातिर्व्यक्तिसमवायोत्पादिनी इत्युच्यते, तदाऽपसिद्धान्तः। सर्वैरपि जातिवादिभिस्तस्या नित्यत्वोपगमात्।

नाऽपि द्वितीयः। स्वाश्रयव्यक्तिनाशे तस्या अपि नाशापत्तेः।

निराश्रयाऽवस्थाने प्रमाणाभावात्। व्यक्त्यन्तरं प्रतिगमने निष्क्रियत्व सिद्धान्त व्याकोपाच्च। उक्तं च—

नायाति न च तत्रासीदस्ति पश्चान्नचांशवत् ।
जहाति पूर्वं नाधारमहो व्यसनसंततिः ॥

एवं रीत्या जातिं प्रत्याख्याय तत्स्थाने इति, अपोहमभिमन्यन्ते । तदुक्तमपोहसिद्धौ--"नाऽस्माभिरपोहशब्देन विधिरेव केवलोऽभिप्रेतः । नाप्यन्य व्यावृत्तिमात्रम् । किन्त्वन्यापोहविशिष्टो विधिः शब्दानामर्थः । ततश्च न प्रत्येकपक्षोपनिपाति दोषाऽवकाशः" इति । एतच्च सर्वं जातिवादिभिः प्रत्याख्यातम्—तथा हि—अगो निवृत्तिसामान्य-मित्यादिना मानमेयोदये ।

## पाणिनीयसूत्रेषु जातिनिर्देशः ।

अस्मिन् प्रकरणे महर्षिपाणिनिनिर्मितेषु अष्टाध्यायीस्थेषु सूत्रेषु—यत्र यत्र जातिनिर्देशः कृतोऽस्ति, तेषां सर्वेषामुल्लेखः प्रयोजनोल्लेखपुरस्सरं कृतोऽस्ति । यथा—'जात्याख्यायामेकस्मिन् बहुवचन-मन्यतरस्याम्,' इति सूत्रे जातिनिर्देशोऽस्ति । तस्य च व्याख्यानमित्थमस्ति । जातेराख्याने एकोऽप्यर्थो बहुवद्भवति इति । यथा ब्राह्मणाः पूज्या, ब्राह्मणः पूज्य इति । अत्र पूज्यत्वेन ब्राह्मणत्वजातेराख्यानं न तु व्यक्तिविशेषस्य । व्यक्तिनिर्देशकेदमादिशब्दाभावात् ।

एवमेव—जातिरप्राणिनाम्, सुप्यजातौ णिनिस्ताच्छील्ये, पञ्चम्या-मजातौ, जातेरस्त्रीविषयादयोपधात्, इत्यादिसूत्रेषु जातिविषयिका रमणीया चर्चा कृताऽस्ति ।

जातेरस्त्रीविषयात्--इत्यत्र तु कठी बह्वृची इत्यादि प्रयोगविवरणे--स्त्रीणां वेदाध्ययनं निषिद्धम्, अनुपनीतत्वात् इत्याशङ्क्य—

पुरा कल्पे तु नारीणां मौञ्जीबन्धनमिष्यते ।
अध्यापनं च वेदानां सावित्रीवचनं तथा ॥

इति यमस्मृतिवाक्यमुद्धृत्य समाहितम् । अथवा—मा नाम तासामध्ययनविधिर्भूत् । तद् वंशप्रभवत्वात्ताच्छब्दचम्, यथाऽनधीयानेऽपि माणवके इत्यपि समाधिरुक्तः । प्रकरणान्ते च—ब्राह्मोऽजातौ

इत्यस्य मनोरमं व्याख्यानं द्रष्टव्यम। तत्र च ब्राह्मो नारद, ब्राह्मी ओषधि, ब्राह्मो मुहूर्त, इत्यादि प्रयोगाणां साधुता। अजाताविति विभक्तयोगेन ब्राह्मणोऽपत्यं ब्राह्मण इत्यस्य च सुष्ठु साधुता वर्णिताऽस्ति। एवमेव व्याकरणशास्त्रीय वर्तिकेषु कुत्र कुत्र जातिनिर्देशः कृत, सः सर्वोऽपि अत्र निबन्धे संकलितो व्याख्यातश्च। तद्वदेव महाभाष्ये प्रदीपादो चागतस्य जातिनिर्देशस्य संकलनं व्याख्यानं च स्वीयसमीक्षादृष्ट्या कृतं द्रष्टव्यमस्ति।

इति प्रथमोऽध्यायः।

## अथ द्वितीयोऽध्यायः

अस्मिन्नध्याये जन्मना गुणकर्मभ्यां वा जातिरिति विषयमुद्दिश्य सम्यग् विवेचनं कृतं वर्तते। अनेन च भूयसी लोकोपयोगिताऽपि सेत्स्यति इत्याशासे, तत्राद्यः प्राचीनानां पक्षः, द्वितीयस्त्वाधुनिकानाम्।

आद्यपक्षे गुणाः कर्माणि च जात्याश्रयीभूतां व्यक्तिमुत्कर्षं प्रापयन्ति। द्वितीयपक्षे तु जातिं जनयन्ति। उभयेऽपि वादिनः स्वस्वपक्षे इमं मन्त्रं प्रमाणीकुर्वन्ति।

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत। इति।

तत्राधुनिका एनं मन्त्रमित्थं व्याचक्षते। अस्य पुरुषसमाजस्य ब्राह्मणो गुणकर्मभ्यां मुखमासीद्। बाहुद्वयं क्षत्रियोऽभूत्। ताभ्यामेव ऊरुद्वयस्थाने वैश्यः कृतः। पद्भ्यां पादस्थानीयाभ्यां गुणकर्मभ्यां सेवार्थं कल्पिताभ्यां शूद्रोऽजायत। इति।

प्राचीनास्तु—'मुख्यार्थबाधाभावे लक्षणाया अनौचित्येन परमेश्वरस्य पद्भ्यां शूद्रोऽजायत—इत्येवार्थः।

पुरुषसूक्ते सृष्टिप्रकरणे वर्तमानस्यास्य मन्त्रस्यास्मिन्नंशे अयमेवार्थो युक्तः। एतत्प्रकरणीयमन्त्रान्तरसंवादाच्च। अतश्चास्य

मन्त्रस्य पादान्तरेष्वपि—मुखाद् ब्राह्मणः, बाहुभ्यां क्षत्रियः, ऊरूभ्यां वैश्योऽजायत—इत्येवार्थो युक्तः। सुपां सुलुक्पूर्वसवर्ण—इत्यादिसूत्रेण पञ्चम्याः स्थाने प्रथमा विभक्तिरादेशरूपतया बोद्धव्या। अतः सर्गादौ परमेश्वरस्याङ्गेभ्यो ब्राह्मणादयो वर्णा उत्पन्ना इति न गुणकर्मप्रयोज्या जातिव्यवस्थाऽतः सिध्यति। इति व्याचख्युः।

अस्मान्मन्त्रात् पूर्वस्मिन्मन्त्रे 'यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्। मुखं किमस्यासीत् किम्बाहू किमूरू पादा उच्येते,' इत्यत्र प्रथमा विभक्तिः कार्यकारणयोरभेदोपचारात् अस्य किं मुखमासीत्? इत्येवं रूपेण बोद्धया। ब्राह्मणोऽस्य मुख मासीदिति मन्त्रस्य चतुर्थपादस्तु सर्गप्रकरणस्योपसंहारभूत इति तदर्थे एव मन्त्रस्य तात्पर्येण तदनुरोधेन ततः पूर्वेषु पादेषु मन्त्रे च पूर्वस्मिन् पञ्चम्यर्थे एव प्रथमा प्रागुक्तप्रकारेण युक्ता।

चन्द्रमा मनसो जात इत्यादौ पूर्वस्मिन् मन्त्रद्वयेऽपि पञ्चमी एव श्रूयते इति पूर्वेष्वपि मन्त्रभागेषु पञ्चम्यर्थे एव प्रथमा भवितुमर्हति। किं च वेदेषु सृष्टिकर्तृत्वेन सर्वत्र परमेश्वर एव श्रुत इति नात्र मन्त्रे पुरुषपदेन मानवसमाजो धर्तुं शक्यते।

किं च सर्ववेदेषु भवत्सम्मते प्राचीने ऋग्वेदे पुरुषसूक्ते अस्ति सप्तमो मन्त्रः—तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रत इति। अत्र यज्ञः यजनीयोविष्णुरेव गृह्यते—'यज्ञो वै विष्णुः,' इति श्रुत्यन्तरसंवादात्। अतोऽपि हेतोः प्रकृते इदं पदं पुरुषसमाजरूपेऽर्थे प्रयोक्तुं न शक्यते।

'तस्माद्यज्ञात् सर्वं हुतः,' इत्यादि मन्त्रद्वयेऽपि यज्ञपुरुषस्य विष्णोरेव सर्वं प्रपञ्चकारणीभूतानां वेदानामाविर्भाव उक्तः। किं चेदंपदस्य पुरुषसमाजरूपार्थकरणे वेदानामपि पुरुषसमाजादाविर्भावे पौरुषेयत्व मापद्येत्। तच्च महदनिष्टं स्यात्। अपरं च—पुरुषसूक्तस्यारम्भे—'सहस्रशीर्षा पुरुषः,' इत्यनेन पुरुषः परमेश्वर एव बोध्यते न तु पुरुषसमाज इति।

अन्यच्च—"यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्।
मुखं किमस्याऽऽसीत् किं बाहू किमूरू पादावुच्येते ॥"

इति मन्त्रे तस्यैव भगवतो विष्णोः मुखादिकार्यविषयकः प्रश्न उपलभ्यते। अतः कार्यकारणयोरभेदोपचारेणैव प्रथमा संगमनीया।

किं च—'मुखादग्निरजायत,' इति मन्त्रे यथा मुखतोऽग्निसृष्टिरुक्ता, तथैवात्राऽपि। अग्निब्राह्मणयोः शास्त्रेषु एकजातीयतया प्रसिद्धिः। किं च—ब्राह्मणोऽस्य मुखमासीत्—इत्यत्र पञ्चम्यर्थाऽपरिग्रहेऽपि पुरुषसमाजस्य मुखरूपो नरः ब्राह्मणत्वजात्याक्रान्त एव जात इति जन्मनैव जातिर्लभ्यते, गुणकर्मभ्यां तु जातिरुत्कर्षः क्रियते। इत्येव लभ्यते।

किं च मुखबाह्वादीनां स्व स्व गुणकर्माभावेऽपि यथा मुखबाह्वादिशब्दवाच्यत्वमेवं ब्राह्मणादिवर्णानामपि स्व स्व गुणकर्माभावेऽपि ब्राह्मणादित्वमेव नत्वन्यजातिमत्त्वम्। एवं च यदा जन्मैव जातिनियामकं तदा गुणकर्मभ्यां तस्याः परिवर्तनं कर्तुं न शक्यते। एकस्य प्राणिनः तत्तच्छरीराऽवच्छेदेन सकृदेव जन्म भवति न तु वारद्वयम्। प्रागुक्त श्रुत्यनुसारेण सर्गादौ ब्राह्मणक्षत्रियादयः परमेश्वरस्य मुखबाह्वादिभ्योऽजायन्त, तदनु स्व स्व मातापितृभ्यः। 'सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः,' इति मनुस्मरणात्।

एवं च परमेश्वरमुखादिजन्यत्वमिव सवर्णेभ्यो विधिना सवर्णासु जन्यत्वमपि ब्राह्मणत्वादिजातिनियामकं मन्तव्यम्। गुणाः कर्माणि च तत्तज्जातीनामुत्कर्षाधायकानि। 'सति मूले तद्विपाकाजात्यायुर्भोगाः, 'कारणं गुणसर्गोऽस्य सदसद्योनिजन्मसु' इत्यादीनि वचनानि अपि अत्र मूलानि द्रष्टव्यानि। अतो जातिर्जन्मनैवेति निश्चप्रचसिद्धान्तः।

## वर्णव्यवस्थाविषये नानाविधभ्रान्तिनिरासः।

वर्णव्यवस्थानियामकतया गुणाः कर्माणि चाश्रीयन्ते, न तु जन्म इत्येवं भ्रान्त्या तत्तत्प्रमाणानि उपस्थाप्यन्ते आधुनिकैर्विद्वद्भिः।

तानि प्रमाणानि जन्मनिमित्तकवर्णव्यवस्थापरतया प्रायो योजितानि इति अवधाय द्रष्टव्यमत्र निबन्धे। संक्षेपेणात्र भूमिकायामपि किञ्चिदुच्यते—

तत्र गुणकर्मणो वर्णव्यवस्थापकत्वे 'ब्राह्मणलक्षणं—वृत्तं स्मृतमिति भविष्यपुराणात आयाति।

तत्र वृत्तमाचारस्तच्च कर्मैव इति वदन्ति आधुनिकाः तन्न प्राचीनविद्वद्भ्यो रोचते।

ब्राह्मणलक्षणमित्यस्य ब्राह्मणत्वस्य जन्मनासिद्धस्य ज्ञापक-मित्यर्थः। अयं ब्राह्मण इति—ब्राह्मणोचितेनाचारेण ज्ञायते इति यावत्। उक्तस्य भविष्यवचनस्य पूर्वार्द्धमस्ति—

'शिल्पं हि वेदाध्ययनं द्विजानाम्' इति।

अतश्च वेदाध्ययनाख्यं कर्माऽपि द्विजानां न जातिनियामकम्, ब्राह्मणत्वजात्याश्रयव्यक्तेरुत्कर्षमात्राधायकत्वात्।

एवं च—

वृत्तं यत्नेन संरक्ष्यं ब्राह्मणेन विशेषतः।
अक्षीणवृत्तो न क्षीणो वृत्ततस्तु हतो हतः॥
आचाराद् विच्युतो विप्रो न वेदफलमश्नुते।
आचारेण तु संयुक्तः सम्पूर्णफलभाग्भवेत्॥

इति मनुश्लोकाभ्यामपि उक्तमेव समर्थ्यते।

एतज्जातीयकमन्यदपि वचनं वृत्तप्रशंसापरमर्थवादमात्रम्।

"चतुर्वेदोऽपि दुर्वृत्तः स शूद्रादतिरिच्यते" इति भारतवचनमपि दुर्वृत्तनिन्दापरमर्थवादरूपमेव।

अतएव—ब्राह्मणस्य विद्या तपो वृत्तं च पात्रत्वसम्पादकानि न तु वर्णत्वसम्पादकानि। उक्तं च महर्षियाज्ञवल्क्येनाऽपि—

न विद्यया केवलया तपसा चाऽपि पात्रता।
यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम्॥ इति॥

यत्तु—

न वृत्तेन न जात्या वा क्रियाभिर्ब्राह्मणो भवेत्।
चाण्डालोऽपि हि वृत्तस्थो ब्राह्मणः स युधिष्ठिर॥

शूद्रोऽपि शीलसम्पन्नो गुणवान् ब्राह्मणो भवेत्।
ब्राह्मणोऽपि क्रियाहीनः शूद्रात् प्रत्यवरो भवेत्॥
न जातिर्दृश्यते तावद् गुणाः कल्याणकारकाः।

इत्यादीनि भारतवाक्यानि, तानि तु स्वस्वगुणकर्मवृत्तसम्पन्ने चाण्डाले शूद्रे वा ब्राह्मणत्वाऽऽरोपात् प्रशंसापरतयाऽर्थवादरूपाण्येव मन्तव्यानि। न तु तत्र वस्तुतो ब्राह्मणत्वम्। सवर्णेभ्यः सवर्णासु इत्यादि वचनविरोधात्। 'न जातिर्दृश्यते' इति कथनेन ब्राह्मणत्व-जातिस्तत्र शूद्रे न दृश्यते, तथाऽपि ब्राह्मण सदृश गुणास्तत्र विद्यमानाः कल्याणकारका बोध्याः। क्रियाभिर्हीनो ब्राह्मणस्तु शूद्रादपि अपकृष्टो भवति। एतच्च वचनं विहितक्रियाविरहितस्य ब्राह्मणस्य निन्दापरतया नेयम्। न तु तस्य ब्राह्मणत्वं नश्यति। 'ब्राह्मणस्तु' इति ब्राह्मणपदेन तदाऽपि तस्य निर्देशात्।

एवम्—न योनिर्नापि संस्कारो न श्रुतं न च संततिः।
कारणानि द्विजत्वस्य वृत्तमेव तु कारणम्॥
वृत्ते स्थितश्च शूद्रोऽपि ब्राह्मणत्वं स गच्छति॥

इत्यादीनि वाक्यानि स्वविधिमुखेन इतरनिषेधमुखेन च वृत्तविषयक-प्रशंसापराणि अर्थवादभूतान्येव। अन्यथा वृत्तसंस्कारयोरपि वस्तुतो निषेधे विरोधिपक्षोऽपि न सिध्यति।

शूद्रब्राह्मणयोर्भेदो मृग्यमाणोऽपि यत्नतः।
नेक्ष्यते सर्वधर्मेषु संहतैस्त्रिदशैरपि॥

इति भविष्यपुराणीयं वचनमपि शूद्रब्राह्मणयोरवयवसंस्थान-कृतभेदाभावं प्रतिपादयति, न तु शूद्रमातापितृजत्व-ब्राह्मणमातापितृजत्व कृतभेदाऽभावम्। अत एव 'सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः' इत्यादि वचनानि संगच्छन्ते। भक्तवरो मतङ्गश्च चाण्डालयोनौ समुत्पन्नो गुणकर्मभ्यां प्रयतमानोऽपि न ब्राह्मणत्वमाप।

एतद्विषये महाभारते इन्द्रमतङ्गयोः संवादो निबन्धे विस्तरेण लिखितो द्रष्टव्यः। श्रवणकुमारोऽपि वैश्याच्छूद्रायां जातो न गुणकर्मभ्यां ब्राह्मणत्वं प्राप्तः। स्वयमेव तेन तदभ्युपगमात्।

अजामिलस्तु जन्मना ब्राह्मण एवासीत् । दासीपतित्वात्तस्य व्रात्यता जाता इत्यन्यत् ।

महाभारते वनपर्वणि सर्पयुधिष्ठिरसंवादे उपलभ्यमानानि वचनान्यपि न जन्मना जातिं प्रत्याख्यातुमीशते । यथा तत्रैवायं श्लोकार्थो युधिष्ठिरेण प्रतिपादितः—

शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते ।
न वै शूद्रो भवेत् शूद्रो ब्राह्मणो न च ब्राह्मणः ॥इति॥

अयं भावः—यद् ब्राह्मणलक्ष्म शूद्रे भवेत्, द्विजे च तन्न विद्यते । स शूद्रः शूद्रो न भवेत्, स च स्वलक्ष्महीनो ब्राह्मणो ब्राह्मणो न भवेत् इति ।

अत्र शूद्रो न भवेत् इत्यस्य शूद्रत्वजातिसत्त्वेऽपि इतर शूद्रवत् तिरस्कार्यो न भवेत्, किन्तु दानमानाभ्यां सत्कार्य एव । अन्यथा शूद्रः शूद्रो न भवेत्—इत्यत्र यथाश्रुते उद्देश्यताऽवच्छेदकतदभावयोरेकत्रबाधा-दाहार्यत्वं प्रसज्येत तज्ज्ञानस्य । एवं ब्राह्मणत्वजातिसत्त्वेऽपि स ब्राह्मणलक्षणशून्यो ब्राह्मण इतर सदाचारसम्पन्नब्राह्मणवत् सत्करणीयो न भवति इति ।

किं च स्वलक्षणरहिते जात्यन्तर लक्षणयुते ब्राह्मणे जात्यन्तर-स्यातिदेश एव न तु तत्र तज्जातिसत्त्वम् । महर्षिणात्रिणाऽपि—

देवो मुनिर्द्विजो राजा वैश्यः शूद्रो निषादकः ।
पशुः म्लेच्छोऽपि चाण्डालो विप्रा दशविधाः स्मृताः ॥

इत्येवं दशविधत्वं विप्राणां वर्णयता पूर्वोक्तविषयः सुष्ठु अनुमोदितः । चाणक्यनीतौ महाभारते शान्तिपर्वणि च एते भेदा द्रष्टव्याः ।

ब्राह्मणे शूद्रशब्दप्रयोगस्तु शूद्रवदित्यर्थे बोध्यः । विनाऽपि वति वत्यर्थो गम्यते इत्यस्य महर्षिणा पतञ्जलिनाऽपि स्वीकारात् ।

एवं च—

यत्रैतल्लक्ष्यते सर्प ! वृत्तं स ब्राह्मणः स्मृतः ।
यत्रैतन्न भवेत्सर्प ! तं शूद्रमिति निर्दिशेत् ॥

इत्यत्राऽपि वर्ति विनाऽपि ब्राह्मणवत् शूद्रवत् इत्येवार्थः कार्यः।

अन्यच्च — यदि ते वृत्ततो राजन् ब्राह्मणः प्रसमीक्षितः।
वृथा जातिस्तदायुष्मन्! कृतिर्यावन्न विद्यते॥

इति श्लोकेनाऽपि जन्मना यदि जातिर्न स्यात् तर्हि कर्माभावे जाति-वैयर्थ्यप्रश्न एवानुपपन्नः स्यात्।

अस्योत्तरमाह युधिष्ठिरः —

जातिरत्र महासर्प! मनुष्यत्वे महामते!
संकरात् सर्ववर्णानां दुष्परीक्ष्येति मे मतिः॥

सर्ववर्णानां सांकर्ये तत्तद्वर्णलक्षणैर्जाति निर्णयेत्।

सन्दिग्धजातिनिर्णयो गुणैः कर्तव्य इत्यत्र मनुरपि ब्रवीति—

पित्र्यं वा भजते शीलं मातुर्वोभयमेव वा।
न कथं च न दुर्योनिः प्रकृतिं स्वां नियच्छति।

किं च—

अब्राह्मणे न हि ब्रह्म ध्रुवं तिष्ठेत् कदाचन॥

अत्र श्लोके अब्राह्मणे वेदस्थित्यभावः स्फुटमेवोक्तः। अतश्च न शूद्राणां वेदाध्ययनेन ब्राह्मणत्वम्।

योनिसंकरे सत्येव इतर गुणा इतरत्र दृश्यन्ते नान्यथेत्यपि उक्तं मनुस्मृतौ—

कुले मुख्येऽपि जातस्य यस्य स्यात् योनिसंकरः।
संश्रत्येव तच्छीलं नरोऽल्पमपि वा बहु॥इति॥

अथ च— यादृशं भजते हि स्त्री सुतं सूते तथाविधम्।
तस्मात् प्रजाविशुद्ध्यर्थं स्त्रियं रक्षेत्प्रयत्नतः॥
यन्मे माता प्रलुलुभे विचरन्त्यपतिव्रता।
तन्मे रेतः पिता वृङ्क्तां श्रुतिरत्र निदर्शनम्॥इति॥

किं च— महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः।

इति वचनेनाऽपि न जन्मना जातिः प्रत्याख्यायते। अपितु ब्रह्म प्राप्तियोग्या तनुः क्रियतेऽइत्येव अभिप्रायः अन्यथा जाति विवक्षायां

ब्राह्मणी इति स्यात् ब्राह्मोऽजातौ इति पाणिनिसूत्रात्। यच्च श्रीमद्भागवते पञ्चमस्कन्धे—

ऋषभदेवस्य एकाशीति पुत्राः कर्मविशुद्धा ब्राह्मणा बभूवुरिति वर्णनं दृश्यते। तदपि ब्राह्मणसदृशा बभूवुरित्यत्रैव तात्पर्यं ग्राहयति।

अतएव—तपःश्रुतयोनीनां ब्राह्मणत्वे प्रयोजकत्वमुक्तम् पतञ्जलिना—

तपः श्रुतं च योनिश्चेत्येतद्ब्राह्मणकारकम्।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः॥इति॥

अनेन स्पष्टं प्रतीयते—यद् ब्राह्मणोचितगुणसमुदायहीनोऽपि जात्या ब्राह्मणो भवति इति।

अतएव—श्रीमद्भागवते कर्मविशुद्धा इति ब्राह्मणत्वातिदेश-प्रयोजकमुक्तम्।

एवमेव— एभिस्तु कर्मभिर्देवि! शुभैराचरितैस्तथा।
शूद्रो ब्राह्मणतां याति, वैश्यः क्षत्रियतां तथा॥

अत्र महाभारतीयपद्येऽपि ब्राह्मणतामित्यस्य ब्राह्मणवत्सत्कार्यता-मित्यर्थः। एवमेव क्षत्रियतामित्यस्यापि बोध्यम्।

क्वचन गुणकर्मभ्यां जन्मान्तरेऽपि जात्यन्तरप्राप्तिपरतया तत्तद्वचनानि नेयानि। यथा—

शूद्रयोनौ हि जातस्य सद्गुणानुपतिष्ठतः।
वैश्यत्वं लभते ब्रह्मन् क्षत्रियत्वं तथैव च॥

एवमेव—महाभारते अनुशासनपर्वणि इन्द्रमतङ्गसंवादवाक्यान्यपि नेयानि।

एवमेव— वैश्यकर्मचयो विप्रो लोभमोहव्यपाश्रयः।
ब्राह्मण्यं दुर्लभं प्राप्य करोत्यल्पमतिः सदा॥
स द्विजो वैश्यतामेति वैश्यो वा शूद्रतामियात्।
स्वधर्मात्प्रच्युतो विप्रस्ततः शूद्रत्वमाप्नुयात्॥

इत्यादीनि ब्रह्मपुराणीयवचनान्यपि जन्मान्तरे जातिप्राप्तिकराणि बोध्यानि।

यच्च— भृगोर्वचनमात्रेण स च ब्रह्मर्षितां गतः।
वीतहव्यो महाराजा ब्रह्मवादित्वमेव च॥

इति भारतवचनमपि ब्रह्मर्षित्वारोपपरतया नेयम्।

तत्र च नेहास्ति क्षत्रियः कश्चित्, सर्वे हीमे द्विजातयः।

इति महर्षिभृगुवाक्यमस्ति।

यत्तु— न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत्।
ब्रह्मणा निर्मितं तत्तु कर्मभिर्वर्णतां गतम्॥

इति भारतवचनं तदपि न कर्मभिर्वर्णव्यवस्थां साधयति। ब्रह्मणा निर्मितं जगत् विशेषरहितमेव। पश्चात् कर्मभिर्भिन्नवर्णतां गतम्, तदनु मिश्रवर्णजातानां जन्मनैव जातिव्यवस्था करणीया। वचनान्तरसंवादात्।

यत्तु शुक्रनीतिवचनम्—

न जात्या ब्राह्मणश्चात्र क्षत्रियो वैश्य एव च।
न शूद्रो न च वै म्लेच्छो भेदिता गुणकर्मभिः॥
ब्रह्मणस्तु समुत्पन्नाः सर्वे ते किन्तु ब्राह्मणाः।
न वर्णतो न जनकाद् ब्राह्मं तेजः प्रपद्यते॥इति॥

तदपि न गुणकर्मभ्यां जाति व्यवस्थापयति। तथा हि—जात्या ब्राह्मणादयो न भेदिताः, जातेरदृश्यत्वात्। किं तु गुणकर्मभिः भेदितः, गुणकर्मणोः प्रत्यक्षत्वात्।

वर्णतो जातितः जनकाद्वा ब्राह्मं तेजो न प्रपद्यते, किन्तु गुणकर्मभ्यां प्रपद्यते। जात्या ब्राह्मणस्याऽपि गुणकर्मराहित्ये ब्राह्मतेजसोऽभावादित्याशयः। एवं च नैताभ्यां वचनाभ्यां गुणकर्मभ्यः जातिव्यवस्था सिध्यति। अपि तु जात्याश्रयस्योत्कर्षं एवायाति।

मानवशब्दो मानवत्वजातिवाची मनोरपत्येषु योगरूढः। मनोः प्रजासु निरूढलक्षणया प्रयुज्यते। एवं च तत्र मानवत्वस्यारोपः। यथा सार्षपे स्नेहे तैलत्वस्यारोपः।

यो ब्राह्मणः क्षत्रियादिर्वा ईसाईसम्प्रदायं मुस्लिमसम्प्रदायं वा गृह्णाति, तस्य ब्राह्मणत्वादि जातिर्जन्मसिद्धा न नश्यति, किन्तु तत्र

ब्रात्यता कर्मनिहंता अव्यवहार्यता चागच्छति। अतएव अयं ब्राह्मण ईसाई सम्प्रदायानुगो जातः, अयं च ब्राह्मणः मुसलमानो जात इति व्यवहारे तत्राऽपि ब्राह्मणपदमुद्देश्यदले प्रयुज्यते एव। योनिसंकरे तु मातुर्जातिरेवाभ्युपेया इति व्यवस्था धर्मशास्त्रेषु वर्तत एव।

किं च—भाविनाऽपि धर्मेण पूर्वमेव व्यपदेशो दृश्यते, यथा एतेषां सूत्राणां शाटकं वय, अनयोः पूलयोः कटं कुरु इति।

अत्र हि यो वातव्यः कर्तव्यो वा नासौ शाटकः कटो वा, ततश्च विज्ञायते—स वातव्यः कर्तव्यो वा यस्योतस्य कृतस्यवा शाटक इति कट इति वा संज्ञा भाविनी स्यादिति। एवमेव विश्वामित्रवीतहव्य-ऋषभपुत्रादिषु क्षत्रियेषु ब्राह्मणोचितकर्मभिर्भावि ब्राह्मणव्यपदेशो घटते। किं च विश्वामित्रविषये तु ब्राह्मवरुव्यवस्थयाऽपि ब्राह्मणत्वं मन्तव्य-मित्यलमनल्पजल्पनेन।

## जातेर्नित्यानित्यत्वविमर्शः।

नित्यपदार्थगता अनित्यपदार्थगता वा उभयविधाऽपि जातिर्नित्या एव। अनित्यत्वे प्रागभावादि कल्पनायामनन्तजातिकल्पनायां चा-प्रामाणिक गौरवापत्तेः। एवं च जातिस्तत्तदाकारैर्व्यज्यत एव न तु क्रियते।

जातिपदव्युत्पत्तिरपि—जनने न जन्मना प्राप्यते स्वाश्रयैर-भिसम्बध्यते सा जातिरिति। एषाऽपि नित्यत्वपक्षे एवानुकूल्यं भजते।

## जातेरेकत्वं नानात्वं वा।

जातेरेकत्वादिविषये उक्तं श्री भर्तृहरिणा वाक्यपदीये—

नैकत्वं नाऽपि नानात्वं न सत्त्वं न च नास्तिता।
आत्मतत्त्वेषु भावानामसंसृष्टेषु विद्यते॥इति॥

अयं भावः—

भावानामेकत्वसंख्योपाधिकः एकत्वेन व्यवहारः, पृथक्त्वनिबन्धनो नानात्वेन व्यवहारः। सत्तानिबन्धनः सत्त्वेनव्यवहारः सामान्यादीना-

मभावेनोपाधिना 'नाऽस्ति, इति व्यवहारः इति परोपाधिक एव सर्वोऽपि भावानां व्यवहारः।

न्यायनये तु नित्यत्वे सत्येकत्वे सति अनेकेषु समवायसम्बन्धेन वर्तमानत्वमितिलक्षणेन एकत्वं स्पष्टमुक्तम्।

## जातिः पदार्थो द्रव्यं वा विशिष्टं वा उभयं वा।

वाक्यपदीये पदार्थविचारावसरे तृतीयकाण्डे जातिसमुद्देशे उक्तमस्ति—

पदार्थानामपोद्धारे जातिर्वा द्रव्यमेव वा।
पदार्थौ सर्वशब्दानां नित्यावेवोपवर्णितौ ॥ इति ॥

अयमाशयः -वाक्यार्थात्पदार्थानामपोद्धारे सर्वशब्दानां जातिरेव नित्यपदार्थं इति केचित्। केचित्तु ब्रह्मैव सर्वशब्दानामर्थं इति द्रव्यमेव नित्यम्। उभावपि नित्यौ इत्यपि केचन। जातिद्रव्ययोरुभयोरपि नित्यत्वोपवर्णने सिद्धे शब्दार्थसम्बन्धे, इत्यादि वार्तिकभाष्ये 'यस्मिंस्तत्वं न विहन्यते,' इति द्रव्यस्याऽपि नित्यत्वमुक्तम्। द्रव्यस्याऽपि प्रवाहनित्यतया शब्दात् सदैव प्रतीतेः। उपर्युक्तेषु पक्षेषु विशिष्टस्य वाच्यतापक्ष एव श्रेयान्, 'न ह्याकृतिपदार्थस्य द्रव्यं न पदार्थः,' इति भाष्योक्त्या उक्तपक्षस्यैव लाभात्।

## जातिर्विभ्वी परिच्छिन्ना वा, सर्वव्यक्तिसम्बद्धा स्वाश्रयव्यक्तिमात्रसम्बद्धा वा।

सर्वदेशसर्वकालस्वसंबन्धार्हसर्वव्यक्तिसम्बद्धत्वेन जातिर्विभ्वी एव, न तु देशतः कालतश्च परिच्छिन्ना। देशतः परिच्छेदे देशान्तरीयव्यक्तिसम्बन्धाभावः प्रसज्येत।

कालतः परिच्छेदे चान्यकालिकव्यक्तिसम्बन्धाऽभाव आपतति। तत्सर्वमनुभवविरुद्धम्। सा चेयं जातिर्विभुत्वात्सर्वव्यक्तिसम्बद्धा किन्तु स्वाश्रयतया अभिमतव्यक्तिषु तस्यास्तादात्म्यं समवायो वा। अन्यत्तु कालिकदैशिकादिरेव सम्बन्धः। इत्येवं बहुविचारो द्रष्टव्यो निबन्धे।

## जातिः प्रत्यक्षा अप्रत्यक्षा वा ।

यो गुणो यदिन्द्रियग्राह्यस्तद्गता जातिस्तदभावो वा तेनैवेन्द्रियेण ग्राह्य इति न्यायशास्त्रीयः सिद्धान्तो लोकसिद्धत्वात्सर्वैरपि जातिवादिभिः स्वीकार्यं एव । एवं च प्रत्यक्षगता जातिः प्रत्यक्षा, अप्रत्यक्षगताचाऽप्रत्यक्षा इति मन्तव्यम् ।

यथाऽस्माकाशकालदिशां परममहत्परिमाणगता परममहत्त्वजातिरप्रत्यक्षा, तदाश्रयस्याऽप्रत्यक्षत्वात् ।

पृथिवीजलादिगता न प्रत्यक्षाश्रयकत्वात् प्रत्यक्षा इति सिद्धान्तः ।

## सत्तारूपा एकैव जातिर्गोत्वादिरूपैरनेका वा ।

यथा न्यायादिनये द्रव्यगुणकर्मसु परा जातिः सत्ता द्रव्यत्वादीनां व्यापिका । सामान्यविशेषसमवायेषु तु सत्ता जातिर्नास्ति । तेषु सदितिव्यवहारस्तु तेषां सत्ता सामानाधिकरण्यप्रयुक्तः ।

जातित्वं विशेषत्वं समवायत्वं वा न न्यायादि मते जातिः ।

आद्येऽनवस्थानात् । द्वितीये स्वतो व्यावृत्तत्वरूपस्य हानेः । तृतीये समवाये समवायान्तराभावात् ।

वेदान्तिनां तदनुगामिनां वैयाकरणानां च मते परमार्थसती एकैव जातिर्महासत्ताख्या परब्रह्मरूपा तस्या एव गोत्वादिभेदेन विवर्ते सति गौर्गौरिति घटो घटइति नानाविधो व्यवहारः समुपपद्यते । तदुक्तं वाक्यपदीये—

सम्बन्धि भेदात्सत्तैव भिद्यमाना गवादिषु ।
जातिरित्युच्यते तस्यां सर्वे शब्दाः व्यवस्थिताः ॥ इति ॥

सत्तायास्तत्तज्जातिरूपेण सर्वशब्दवाच्यत्वं समर्थितं वाक्यपदीये—

तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते ।
सा नित्या सा महानात्मा, तामाहुस्त्वतलादयः ॥ इति ॥

किं च समग्रक्रियाविकारो ब्रह्मरूपायाः सत्ताया विवर्त एवेति अत्रार्थे निरुक्तकारसंवादोऽपि दर्शितो वाक्यपदीये—

सैव भावविकारेषु षडवस्था प्रपद्यते ।
क्रमेण शक्तिभिः स्वाभिरेवं प्रत्यवभासते ॥ इति ॥

एवं च सत्तारूपैकैव जातिः गोत्वादिरूपैरनेका भवति इति सिद्धम् ।

एवमेव जातेः स्वाश्रयोत्पत्तौ हेतुत्वविमर्शः पूर्णरूपेण निबन्धे कृतो द्रष्टव्यः ।

## 'जातिव्यक्त्योः सत्यासत्यविमर्शः'

शाब्दप्रमायांविशेष्यविशेषणाभावेन प्रतीयमानयोर्जातिव्यक्त्योः जातिः सत्या व्यक्तिस्तु असत्या इत्यद्वैतवादिनः, तदनुसारिणो वैयाकरणाश्च—

तदुक्तं वाक्यपदीये—

सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ ।
सत्यं यत्तत्र सा जातिरसत्या व्यक्तयः स्मृताः ॥ इति ॥

सर्वोऽपि भावो जातिव्यक्तिरूपतया भागद्वयात्मकः, तत्र जातिर्महासत्ताख्या ब्रह्मरूपतया सत्या गोत्वादिरूपा वा नित्यत्वेनाबाध्यत्वात्सत्या । व्यक्तिस्तु जात्याधारतया कल्पिताऽऽगमाऽऽपायशालिनी अविद्या प्रवृत्तिरूपत्वेन । सत्या इति विवेकः ।

उक्तं च पस्पशाह्निके—

'तदपि नित्यं यस्मिंस्तत्त्वं न विहन्यते' इति । यस्मिन् सति व्यक्तीनां तत्त्वं तद्बुद्धिविषयत्वं न विहन्यते, तदेव हि सत्यमिति तदर्थः ।

'शब्दजात्यर्थं जातिभेदेन जातिभेदविमर्शः, घटपटशब्दादिगता घटशब्दत्वादिरूपा जातिः, घटपटाद्यर्थगता च घटत्वपटत्वरूपा जातिः । एतदुभयमपि घटादिशब्दवाच्या । तत्राऽपि प्रथमं घटशब्दगता जातिरेव तेनाभिधीयते । पश्चात्तु शब्दजातेरर्थजात्यभेदारोपेणार्थजात्यभिधानमिति क्रमः । उक्तं च हरिणा—

स्वाजातिः प्रथमं शब्दैः सर्वैरेवाभिधीयते ।
ततोऽर्थजातिरूपेषु तदध्यारोपकल्पना ॥ इति ॥

अयं भावः—सर्वैः शब्दैः प्रथमं स्वाजातिरेव अभिधीयते । स्वा-आत्मीया गोशब्दत्वादिरूपा असाधारणी जातिर्न तु सकलशब्दसाधारणी शब्दत्वादिरूपा । स्वाजातिरेव शब्दस्य मुख्यमभिधेयं भवति इति तात्पर्यम्—

उक्तं च वार्तिककृताऽपि—'न वा शब्दपूर्वको ह्यर्थे सम्प्रत्ययः, इति ।

ब्रह्मरूपायाः सत्ताया एव क्रियाद्रव्यभेदेन विवर्तद्वयम् ।

ब्रह्मस्वरूपभूता सत्तैव क्रियारूपेण द्रव्यरूपेण च विवर्तते इत्युक्तं वाक्यपदीये—

प्राप्तक्रमा विशेषेषु क्रिया सैवाभिधियते ।
क्रमरूपस्य संहारे तत्सत्त्वमिति कथ्यते ॥

अयं भावः—पाकादिक्रियाविशेषेषु व्यक्तिस्थानीयेषु साधन-व्यापार-वशात क्रमवत्सु सत्सु तद्गता सत्ताऽपि प्राप्तक्रमाऽक्रमाऽपि क्रमवत्त्वेन भासमाना सत्तैव क्रियाऽभिधीयते । साधनव्यापारोपसंहारवशात् व्यक्तिस्थानीयेषु क्रियाविशेषेषु क्रमरूपस्य संहारे तु अक्रमत्वेन स्थिता सत्तैव सत्त्वं द्रव्यमिति कथ्यते । इत्येवं भूयानभिप्रायो निबन्धे द्रष्टव्यः ।

षड्विधो भावविकारः सत्ताविवर्त एव ।

समग्रोऽपि क्रियाकलापः सत्तारूपस्य ब्रह्मणो विवर्त एवेति निरुक्तकृन्मतम् । तत्रैव च श्रीहरेरपि सम्मतिः । उक्तं च—

सैव भावविकारेषु षडवस्थाः प्रपद्यते ।
क्रमेण शक्तिभिः स्वाभिरेवं प्रत्यवभासते ॥ इति ॥

अयमर्थः—सैव सत्तैव भावविकारेषु जायमानेषु स्वाभिः शक्तिभिः क्रमेण षडवस्था जन्मसत्तादिकाः प्रपद्यते । किं च एवं षडवस्थावत्त्वेन

प्रत्यवभासते चेति। अधिको भावो निबन्धे द्रष्टव्यताम्। एवमेव क्रमाख्या कालशक्तिरपि ब्रह्मभूतायाः सत्ताया आत्मभूता एव। उक्तं च वाक्यपदीये—

आत्मभूतः क्रमोऽप्यस्या यत्रेदं कालदर्शनम्।
पौर्वापर्यादिरूपेण प्रविभक्तमिव स्थितम्॥ इति।

अयं भावः—योऽयं जन्मादिक्रियाणां भावविकाररूपाणां क्रमः, सोऽपि आत्मभूतोऽस्याः सत्तायाः। न केवलं ताः क्रियाः एव क्रमवत्योऽस्या आत्मभूताः, किन्तु अन्येऽपि क्रमवन्तः सर्वे भावाः। क्रमवद्भ्यो व्यतिरिक्तस्य क्रमस्यासंकेतनात्। यत्र क्रमे कालं नाम पदार्थान्तरं तीर्थिकाऽपश्यन्ति पौर्वापर्यादिक्रमेण प्रविभक्तम्।

कालस्य क्रमेण पौर्वापर्यादिरूपेण प्रविभक्तत्वाद् दर्शनमपि प्रतिभक्तमिवस्थितमित्युक्तम्। वस्तुतोऽप्रविभक्तोऽपि कालः क्रियारूपोपाधिवशात् पौर्वापर्यादिरूपेण प्रविभक्त इव भवति।

अतएव घटिकासूचीक्रियाभिः घण्टामिनटादिव्यवहारोऽद्यापि भवति। आदित्यक्रियया च सूर्यघटीयन्त्रेण प्रविभक्तस्य कालस्य परिज्ञानं भवति।

## एवं भावानां नास्तित्वमपि सत्तैव

ननु— नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्व-दर्शिभिः॥

इति गीतोक्तरीत्या जन्मनाशौ अवस्तुत्वात् कथं सत्तात्मकौ स्यातामित्याशङ्क्य समाहितं नाशस्य सत्तात्मकत्वं वाक्यपदीये—

तिरोभावाभ्युपगमे भावानां सैव नास्तिता।
लब्धक्रमे तिरोभावे नश्यतीति प्रतीयते॥ इति॥

एवमेव भावानां जन्माऽपि सत्त्वैव, उक्तं च श्रीहरिणा—

पूर्णस्मात् प्रच्युता धर्मादप्राप्ता चोत्तरं पदम्।
तदन्तराले भेदानामाश्रयाज्जन्म कथ्यते ॥ इति ॥

एवं सादृश्यशक्त्योर्जातित्वं वाक्यपदीयदृष्ट्या प्रदर्श्य सौगतानां मते काल्पनिकं जातिदर्शनं च निरूप्य जातिवादिनये ज्ञानगतजात्या अर्थजातीनां समर्थनं च प्रदर्श्य जातिपदार्थवादे सरूपसूत्रस्य फलाभावं दर्शयता द्वितीयोऽध्यायः समापितः।

इति द्वितीयोऽध्यायः

## अथ तृतीयोऽध्यायः

### जातेरप्रत्यक्षत्वपक्षेऽनुमेयत्वमस्ति न वा ?

तत्र जातौ रूपमहत्त्वयोरभावान्नेयं चक्षुषा ग्रहीतुं शक्या। स्पर्शाभावान्न त्वग्ग्राह्या। शब्दत्व-रसत्व-गन्धत्वजातीनामभावान्न श्रोत्र-रसन-घ्राण-ग्राह्याऽपि, अतश्चानुमेया एव। तत्राऽपि च सामान्यतोऽनुमानं यथा सर्वा द्रव्यगुणकर्मविषया अनुगतबुद्धयः एकधर्महेतुका अनुगतबुद्धित्वात्, व्यतिरेकव्यावृत्तबुद्धिवत् इति। स च धर्मो व्यक्तेरभेदतुल्यत्वादीनां बाधकानामभावे जातिलक्षणाक्रान्ततया जातित्वेन व्यवह्रियते न्यायदर्शने विशेषतोऽनुमानेभ्यश्च कारणताऽवच्छेदकतया कारणेषु, कार्यताऽवच्छेदकतया कार्येषु शक्यताऽवच्छेदकतया शक्येषु तत्र तत्र न्यायादिग्रन्थेषु दर्शिता एव।

### जातौ शब्दबोधविषयत्वमस्ति न वा।

घटादिशब्दानां तत्तज्जात्यवच्छिन्नेषु तत्तज्जातौ वा शक्तिरिति मते जातेः शाब्दबोधविषयत्वमस्त्येव। किं च घटत्वादि धर्माणां स्वरूपेणैव

घटादिपदजन्यबोधविषयत्वं न तु जातित्वेनेत्यतोऽपि नाऽस्ति तस्याः शाब्दबोधविशेष्यता । वस्तुतस्तु जातेर्घटादिपदजन्यबोधविशेष्यत्वाभावेऽपि सामान्याऽऽकृत्यादिपदजन्यबोधविशेष्यत्वं केन वारयितुं शक्येत ?

यदि तु शब्दप्रमाणस्यानुमाने एवान्तर्भावः तदा नास्ति जातेः शाब्दबोधविषयता । इत्येवं भूयान् विमर्शः कृतोऽस्ति निबन्धे । जातावेव शक्तिरिति मीमांसकमतं च विमृश्य जातिशिष्टव्यक्तौ शक्तिरिति न्यायमतं च विमृश्य जात्यादिषट्के शक्तिरिति स्वसिद्धान्तो महता संरम्भेण प्रदर्शितः । तथा हि—

एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा ।
नामार्थं इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः ॥
शब्दोऽपि यदि भेदेन विवक्षा स्यात्तदा तथा ।
नो चेच्छ्रोत्रादिभिः सिद्धोऽप्यसावर्थोऽवभासते ॥
न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥

इत्येवं वैयाकरणमतमनुद्रष्टव्यम् । "जातौ न जातिरिति मतान्तरविमर्शः, घटत्वादिजातिषु घटत्वत्वादिरूपा जातित्वरूपा वा अक्षत्रितयगतासु विभीतकाक्षत्वादिव्याप्यासु अक्षत्वजातिषु तिसृषु अक्षत्वत्वरूपा जातिर्नास्ति, अनवस्थाप्रसङ्गात् । जातित्वप्रतिबन्धकदोषेषु अनवस्थाया अपि परिगणनात् । किं च जातौ न जातिः, समवायाभावात् । अतएवासम्बन्धोऽपि जातिबाधकेषु परिगणितः । किंच घटत्वादिषुसर्वासु जातिषु यदि जातित्वरूपा जातिः स्वीक्रियते, तदा तस्या नित्यत्वे सति एकत्वे सति अनेकसमवेतत्वरूपायाः पदार्थान्तरघटिततया जातित्वासम्भवः । जातेरखण्डत्वात्, घटत्वगतं घटत्वत्वं तु न जातिः, एकव्यक्तिवृत्तित्वात् ।

'जातावपि जातिरिति शब्दिकसिद्धान्तः, जातावपि जातिरिति वैयाकरणानां सिद्धान्तः । तथा हि—भिन्नासु घटव्यक्तिषु अभिन्नस्य

घट इति प्रत्ययस्य दर्शनेन यथा घटत्वं जातिः सिध्यति तथा भिन्नासु घटत्वादि जातिषु जातिरिति अनुगतप्रत्ययदर्शनेन जातिष्वपि जातित्वरूपा जातिरस्ति इति प्रतिभाति। एवमेव अक्षत्रितयानुवर्तिनीषु अक्षत्वजातिषु अक्षत्वत्वनामिकाऽपरा जातिरस्त्येव, अतएव जातिपक्षमाश्रित्यसरूपाणामित्यस्य प्रत्याख्यानं संगच्छते।

एवमेव विशेषेष्वपि जातिरस्ति नवेति संशयं भूयसीभिर्युक्तिभिर्निराकुर्वता तृतीयोऽध्यायोऽपि व्याख्यातः।

## चतुर्थोऽध्यायः

### अथ जात्याकृतिविमर्शः।

तत्र जात्याकृतिव्यक्तयः पदार्थ इति गोतमसूत्रम्। तत्र जातिर्नित्या एका अनेकसमवेता च शब्दप्रवृत्तिनिमित्तं गोत्वादिका। आकृतिस्तु-आक्रियते अभिव्यज्यते जातिरनया इति व्युत्पत्त्या जातेरभिव्यञ्जिका अनुगतसंस्थान व्यङ्ग्या—आकृतिग्रहणा जातिरित्यादौ।

एवमेव जातिभेदाभेदविमर्शोऽपि प्रयत्नेन सम्पादितोऽस्ति यथा—सत्तामात्रं ब्रह्मैव सर्वत्राऽनुगतं जातिरूपमेकमेव। तथा तथाऽऽकृत्या तेन तेन च द्रव्येण वा व्यवच्छिन्नं तदेव ब्रह्मगोत्वघटत्वादिविविध जातिरूपतया प्रतीयते इति ब्रह्माद्वैतवादिनः। अतएव—घटः सन् घटः सन् घटः सन् इत्यादिकासु प्रतीतिषु सर्वजातिव्यापिका सत्ता तद्व्याप्याश्च घटत्वादिका जातयः प्रतीयन्ते।

इत्येवं जातीनां वस्तुतोऽभेद एवेति। अन्येषां मते—यथा प्रत्यक्षं यथाऽनुमानं च जातीनां भेद एव, अबाधितभेदप्रत्ययादिति सिद्धान्तयन्ति।

### अथ जातिव्यञ्जकविमर्शः।

तत्र जातेर्व्यञ्जकाः संक्षेपेण त्रिविधाः।

स्वाश्रयगता साधारणो गुणः। अवयवसंस्थानम्। उपदेशः।

तत्र पृथिवीत्व जलत्व तेजस्त्वादि जातीनामभिव्यञ्जकाः ।

तत्र प्रथमः— आश्रये गन्धग्रहणेन हि सर्वत्र पृथिवीत्वजातिरभिव्यज्यते । न तु अवयवसंस्थानेन, तस्यानियतत्वात् । एवं जलत्वं शीतस्पर्शरूपेण वा स्वाश्रयगतासाधारण गुणेन व्यज्यते, नतु संस्थानेन । वापीकूपतडागादिसंस्थानामनियतत्वात् । एवं तेजस्त्वमपि औष्ण्यप्रकाशाभ्यां प्रत्येकेन समुदिताभ्यां वा व्यज्यते । न तु संस्थानेन । सूर्यचन्द्रवह्न्यादि संस्थानानामनियतत्वात् । प्राणिगतासु जातिषु काश्चिदुपदेशमात्रग्राह्या भवन्ति यथा ब्राह्मणत्वादि जातयः । काश्चित् संस्थानग्राह्याः यथा—मनुष्यत्वसिंहत्वगोत्वादयः । स्पष्टं चैतत्सर्वम् वाक्यपदीये ।

## जातिबाधक दोषाः ।

व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः । रूपहानिरसम्बन्धो जातिबाधकसंग्रहः ।

इति कारिकया जाति बाधकादोषा निरूपिताः सन्ति । निबन्धे च विस्तरेण विविक्ता द्रष्टव्याः ।

# पञ्चमोऽध्यायः

## आकाशकालादावपि जातिरिति शाब्दिकसिद्धान्तः ।

आकाशमेकं कालश्चैक इति स्वीकुर्वन्तो नैयायिका आकाशत्वप्रभृतीनां धर्माधर्माणां जातित्वं नैव मन्वते । शाब्दिकास्तु एतानपि धर्मान् जातित्वेन स्वीकुर्वन्ति । तथा हि-यत्र देशे घटादिना सहाकाशस्य संयोगः परिसमाप्तो वर्तते, स प्रदेशो भवति अनेकः । संयोगस्तु अव्याप्य वृत्तिः परिच्छिन्नवस्तुवृत्तिर्भवतीति संयोगस्य नियतदेशतया संयोगिनोऽपि नियतदेशा इति संयोगिनां घटादीनां परिमितत्वेन भवत्येवाकाशस्योपाधिकृतो भेदः । उक्तं च श्रीहरिणा—

संयोगिधर्मभेदेन देशे च परिकल्पिते ।
तेषु देशेषु सामान्यमाकाशस्याऽपि विद्यते ॥

एवं बहुविमृष्टं निबन्धे द्रष्टव्यम् ।

## आधुनिकानां नये जातिविमर्शः ।

यद्यपि आधुनिका भौतिक-विज्ञानवादिनः प्रत्यक्षमेवैकं प्रमाणं मन्यते, इति आपाततः प्रतीयते, तथाऽपि अनुमानयपि तेषां मते अस्त्येव प्रमाणम् । अन्यथा कथं गणितेन चन्द्रलोकादि दूरत्वमानपरिज्ञानम् । कथं वा शब्दप्रकाशयोर्गतिवेग-तारतम्य-परिज्ञानम् ।

तदेतत्सर्वं गणितशास्त्रानुसारि गणनाजन्य-ज्ञानमनुमानमेव न प्रत्यक्षम् । इन्द्रियागोचरत्वात् । एतेषां मते प्रत्यक्षागोचरत्वात् अनुमाना गोचरत्वाच्च जातिः पदार्थो नास्त्येव ।

जातिकार्यं सर्वमपि आकृत्यैव निर्वोढुं शक्नुवन्ति इमे ।

नास्ति ब्राह्मणचाण्डालयोः कश्चन भेदः, संस्थानसाम्यात् । विदेशेष्वपि यस्यां कस्यांचिद्योनौ समुत्पन्ना महर्षिकल्पा मांसमदिरासेविनोऽपि अद्भुतानां विज्ञानविषयाणामधिकर्तारः प्रादुर्भवन्ति । चन्द्रलोकादियात्रामपि ते निर्वहन्ति । तस्माद् ज्ञानमेव परमस्य पूतत्वस्य पूज्यत्वस्य च कारणम्, न जातिरित्यादि बहुविमर्शो द्रष्टव्यः पूर्वपक्षे ।

## अथाधुनिकमतनिरासः ।

जातिवादिनां प्राचामाचार्याणामयमाशयः —

अस्ति हि शब्दस्यार्थेन रूढोत्पत्तिकः सम्बन्धः । अस्ति च जातिशब्दो व्याकरणबोधितसाधुताकोऽनादिर्लोके प्रयुज्यमानः । अतश्चास्ति तत्सम्बद्धस्तदर्थोऽप्यनादिः इति निर्णीयते । एतस्य च जातिशब्दस्य वाच्यमर्थद्वयम् । नित्यसामान्यरूप एकोऽर्थः । द्वितीयस्तु व्यवहारार्थं कल्पितः सादिः । यथा मनुष्यशब्देनाभिधीयमानो मनुष्यत्वरूपं सामान्यमनादिरर्थः । द्वितीयं कल्पितं सामान्यं कल्पनाऽऽपोढमिति बौद्धाः

प्रवदन्ति । ता एव कल्पिता जातयः 'अङ्ग्रेज, जर्मन, फ्रेंच, इण्डियन्, अमेरिकन', इत्यादयः 'मुसलमान, यहूदी,' इत्यादयश्च ।

ब्राह्मणत्वादयो जातयस्तु अनादौ अपौरुषेयवेदे समुपलभ्यमाना अनादय एव ।

न हि ब्राह्मणादीनाम् 'इदं प्रथमः, कश्चन इतिहासः क्वचिदपि श्रूयते स्मर्यते वा । माठरत्वकौण्डिन्यत्वादयस्तु गोत्रजातयः कल्पिता अकल्पिताश्च । तत्राद्याः दत्तक-पालिक-क्रीतादिषु पुत्रेषु गोत्रपरिभ्रंश-दर्शनात् । तथा च स्मर्यते—'गोत्ररिक्थे जनयितुर्नो दद्याद् दत्तकः सुतः' पालिते च शुनःशेपादौ विश्वामित्रादि गोत्रपरिग्रहो दृश्यते शास्त्रेषु ।

अकल्पिता तु औरसानां पुत्राणाम् ।

आधुनिकैरुच्यमानं जातेरप्रत्यक्षत्वमपि न शोभनम्, घटोऽयं घटोऽय-मित्यादि प्रत्यक्षे विशेषणतया जातेरपि प्रत्यक्षगोचरत्वात् ।

रजकचर्मकारप्रभृतयः सप्त अन्त्यज जातयः कल्पिता एव । तथा हि—अपौरुषेये वेदे ब्राह्मणत्वादयश्चतस्र एव वर्णजातयः कुलालकर्मारप्रभृतयो-ऽल्पीयस्य एवान्या अपि जातयः परिगणिताः सन्ति ।

मतङ्गऋषौ तु ब्राह्मणजातीये मातङ्गत्वस्यातिदेशो इति चिरन्तनेति-हासदर्शनेनावसीयते व्यवहारार्थं हि यथा विश्वामित्रादेः क्षत्रियजातीयस्य ब्राह्मणत्वमतिदिष्टं कल्पितं, तथा मतङ्गादेः ब्राह्मणस्य मातङ्गत्वमति-दिष्टं कल्पितमस्ति । प्राचीनाश्च संस्कारसम्पन्ना विद्वांसो भारतीयाः अभूवन् । नहि तत्तज्जात्युचिताः संस्काराः विज्ञानविद्यां प्रतिबध्नन्ति विद्यानां गुरूपदेशाधीनत्वात् । शिष्यजिज्ञासातिशयसाध्यत्वाच्च ।

श्रूयते हि सनातनधर्ममानिनः कुमारिल-महापादस्य बौद्धादि गुरुभ्यो विद्याग्रहणं तन्मत-प्रत्याख्यानं च ।

किं च जातिबन्धन व्यवस्थया एव भारतमद्यापि भारतम् । अन्यथा विदेशीयानामेव भूमिरियं कथं न स्यात् । अपरं चात्मगौरवं सात्त्विका-

हङ्कारस्वरूपं जातिनियमप्रक्रिययैव सम्पद्यते। एवं च शतसहस्रेभ्यो-वर्षेभ्यः सुपरीक्षिता जातिव्यवस्थाऽवश्यं परिपालनीया इत्यत्र नास्ति काचन विप्रतिपत्तिः।

अन्ते च ग्रन्थस्योपसंहारो द्रष्टव्यः।

पञ्चमोऽध्यायः समाप्तः

इत्येवं निबन्धे समागतान् विषयान् संक्षिप्य प्रादर्शयत्—

—डॉ० राधेश्याममिश्रः

व्याकरणशास्त्रदृष्ट्या जातिस्वरूपविमर्शः

# विषयाऽनुक्रमणिका



## अथ प्रथमोऽध्यायः

इति प्रथमोऽध्यायः

अथ द्वितीयोध्यायः ।

इति द्वितीयोऽध्यायः

**अथ तृतीयोऽध्यायः**

इति तृतीयोऽध्यायः

**अथ चतुर्थोऽध्यायः**



इति चतुर्थोऽध्यायः

**अथ पञ्चमोऽध्यायः**



इति पञ्चमोऽध्यायः

**परिशिष्टम्**



॥ श्रीमङ्गलमूर्त्तये नमः ॥

अद्वैतवादे या सत्ता, सच्चिदानन्दरूपिणी।
विवर्तमाना भेदेषु, जातिभेदमुपागता॥ १ ॥

एकाऽप्यनन्ताऽग्राह्याऽपि, सर्वानुभवगोचरा।
सर्ववर्णेष्वनुगता, सर्ववर्णसमाहृता॥ २ ॥

चराचरजगद्व्याप्ता, चराचरविशेषिका।
नानाऽऽकृतिविभाव्याऽऽसौ, जननी संप्रसीदतु॥ ३ ॥

जात्याकृतिमहासत्ता, सामान्यादिपदेरिता।
बहुरूपा बहुपदा, जननी संप्रसीदतु॥ ४ ॥

अनादाविह संसारे, व्यवहारानुगामिनी।
सकृदाख्यातनिर्ग्राह्या, जननी संप्रसीदतु॥ ५ ॥

# व्याकरणशास्त्रदृष्ट्या जातिस्वरूपविमर्शः

## अथ प्रथमोऽध्यायः

•

## १. व्याकरणशास्त्रदृष्ट्या क्रियमाणे जातिलक्षणे भाष्यवार्तिककृतोः सम्मतिः

अस्मिन्प्रबन्धे एतन्निरूपणमत्यावश्यकं प्रतीयते यत् किन्नाम व्याकरणशास्त्रम् ? तस्य सारभूतं किं स्वरूपं वर्तते ? इति । तत्सर्वं प्रागुपस्थाप्यते :—

### १—( क ) व्याकरणशास्त्रस्य सामान्यपरिचयः

"व्याक्रियन्ते प्रकृतिप्रत्ययभेदेन व्युत्पाद्यन्ते शब्दा अनेनास्मिन् वेति करणेऽधिकरणे वा अनट्[1] ।"

व्याक्रियन्ते विविच्यन्तेऽसाधुशब्देभ्यः साधुशब्दाः पृथक् क्रियन्ते येन तद् व्याकरणम् ।

वि + आङ् पूर्वकात् "कृ" धातोः करणे ल्युटि[2] सति व्याकरण-शब्दो निष्पद्यते ।

---

१. मु० व्या०, दुर्गादास टी० पृ० सं० २ ।। इति ।।

२. करणाऽधिकरणयोश्च ( पा० अ० अ० ३, पा० ३, सू० ११७ ) ।।इति।।

एवञ्च शब्दनिष्ठसाधुत्वज्ञानजनकं शास्त्रं व्याकरणशास्त्रमित्यायातम्। महाभाष्यकृताऽपि लक्ष्यं लक्षणञ्चेतत्समुदितं व्याकरणमिति व्याकरणपदार्थविचारावसरे [1] यदुक्तं तस्याप्यत्रैव तात्पर्यम्।

अथ शब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यमिति ब्रुवता भाष्यकृता शब्दानुशासनपदेनापि व्याकरणशास्त्रमेव विषयी कृतमित्यपि न तिरोहितं विदुषाम्।

तत्रापि शब्दानामनुशासनमिति विग्रहः प्रदर्शितः तत्र चानुशासन-मिति करणे ल्युट्, अनुशिष्यते साधुत्वं ज्ञाप्यते येनेति चार्थः।

शब्दानामिति कर्तृकर्मणोरिति[2] कर्मणि षष्ठी, अतश्च न "कर्मणि[3] च" इति समास-निषेध इत्यादि सर्वं स्पष्टं कैयटीये प्रदीपे[4]।

एवञ्च शब्दानुशासनमित्यस्य शब्दनिष्ठसाधुत्वानुशासनं शास्त्र-मित्यर्थे मदुक्तं पर्यवसितम्।

तच्च व्याकरणं प्रकृते पाणिनीयमेव गृह्यते तस्यैव साम्प्रतं संस्कृतसाहित्ये साङ्गोपाङ्गेनोपलभ्यमानत्वात्।

अन्यदृष्ट्या इदमपि वक्तुं शक्यते भाषाया अस्तित्वरक्षकं शास्त्रम्, "नियमविशेषः" व्याकरणशास्त्रम्।

अन्यथा भाषायाः व्याकरणात्मकबन्धनाभावे तस्याः अस्तित्वमेव समाप्तं स्यात्।

---

१. "लक्ष्यलक्षणे व्याकरणम्" लक्ष्यं च लक्षणञ्चैतत्समुदितं व्याकरणं भवति। किं पुनर्लक्ष्यम्, किं वा लक्षणम्? शब्दो लक्ष्यः, सूत्रम् लक्षणम्। (महा० भा० अ० १, पा० १, आ० १,) ॥ इति ॥

२. "कर्तृकर्मणोः कृति" (पा० अ० अ० २, पा० ३, सू० ६५) ॥ इति ॥

३. पा० सू०—२।२।१४।

४. "शब्दानुशासनमिति—अत्र याचार्यस्यकर्तुः प्रयोजनाभावादनुपादानादुभय-प्राप्त्यभावान्नोभयप्राप्तौ कर्मणीत्यनेन षष्ठी, अपितु कर्तृकर्मणोः कृतीत्यनेनेति कर्मणि चेति समासप्रतिषेधाऽप्रसंगादिध्मप्रव्रश्चनादिवत्समासः।"
(म० भा० प्र० अ० १, पा० १, आ० १) ॥ इति ॥

# १—( ख ) जातिपदार्थस्य सामान्यज्ञानम्

तत्र च शब्देषु वर्तमानः साधुत्वरूपो धर्मः अर्थविशिष्टशब्दनिष्ठः पुण्यजनकताऽऽवच्छेदकः व्याकरणव्यङ्ग्यः जातिविशेषः[१]।

एवञ्चास्मिन् पाणिनीयव्याकरणे बहवः साधवः शब्दास्तदर्थाश्च संकेतिताः। तत्रार्थो द्विविधः —

१—एकश्च स्वसंकेतविषयः[२]। यथा—इक्-अच्-यणादि पदार्थः।

२—द्वितीयश्च लौकिकसंकेतविषयः पश्वादिपदार्थः[३]।

एवं "जात्याख्यायाम्[४]" "जातेरस्त्री[५]" इत्यादिसूत्रेषु जातिपदेन उच्यमानः जातिपदार्थो यद्यपि न सूत्रकारसंकेतविषयस्तथापि लौकिकसंकेतविषयोऽस्त्येव। तथा हि लोके—जातेः पदार्थस्य द्वैविध्यमनुभूयते—गोत्ववृक्षत्वादिरूपः—आकृतिव्यङ्ग्यः एकः, अपरश्चोपदेशग्राह्यः ब्राह्मणत्वादिरूपः। अयं द्विविधोऽपि प्रकार उक्तं शास्त्रेषु गृह्यते वक्ष्यमाणात् प्रमाणात्[६]।

लक्ष्यतावच्छेदकसमनियतो साधारणो धर्मो लक्षणमित्युच्यते[७] स च धर्मोऽव्याप्त्यतिव्याप्त्यसम्भवाख्यदोषत्रयशून्यः सकललक्ष्यवृत्तिः।

यथा—गोः सास्नादिमत्त्वमेव लक्षणं लक्ष्यतावच्छेदकेन समनियतत्वात्।

---

१. व्याकरणव्यङ्ग्योऽर्थविशिष्टशब्दनिष्ठः पुण्यजनकतावच्छेदको जातिविशेषः ( ल० म० श० नि० प्र० )।

२. "आदिरन्त्येनसहेता (पा०अ०अ० १, पा० १, सू० ७ १) १ संकेतग्राहकम्।

३. हरतेर्दृतिनाथयोः पशौ ( पा०अ०अ० ३, पा० २, सू० २५ ) इत्यत्र यथा।

४. जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् ( पा० अ० अ० १, पा० २, सू० ५८ )॥ इति॥

५. जातेरस्त्रीविषयादयोपधात् ( पा० अ० अ० ४, पा० १, सू० ६३ )॥इति॥

६. "आकृतिग्रहणा जातिः" (म०भा०अ० ४, पा० १, सू० ६३ वा०)॥इति॥

७. गन्धवतीति—"गन्धवत्त्वं पृथिव्या लक्षणम्" लक्ष्या पृथ्वी। पृथ्वीत्वं लक्ष्यतावच्छेदकम्। पृथ्वीत्वावच्छिन्ना लक्ष्यता, तद्धर्मावच्छिन्नं लक्ष्यं स धर्मो लक्ष्यतावच्छेदकः, ( त० सं० न्या० बो० टी० )॥ इति॥

न तु नीलत्वं पीतत्वं वा. बहुतरेषु गोषु अवर्तमानतया अव्याप्ति-दोषग्रस्तत्वात्।

नापिशृङ्गित्वं तल्लक्षणम्। अतिव्याप्तिदोषग्रस्तत्वात्।

नापि एकशफवत्त्वं गोर्लक्षणम्। सकलेषु गोषु अवर्तनेनासम्भव-दोषग्रस्तत्वात्[1]।

एवं रूपेण प्रकृतेर्जातिर्लक्षणमपि विवेचनीयमस्ति येन सजातीय-विजातीय-स्वगतभेदशून्यं जातेः स्वरूपं परिचीयेत।

## १—( ग ) भाष्यवार्तिकदृष्ट्या जातेर्लक्षणनिर्वचनम्

तच्च अवयवसंस्थानव्यञ्जत्वं प्रथमं लक्षणमुच्यते। यथा—गोत्व-जातेस्ससास्नादिरूपावयवसंस्थानेनाभिव्यक्तिर्भवति।

घटत्वजातेः कम्बुग्रीवादिमत्या आकृत्या ( कपालाद्यवयवसंस्थानेन ) ज्ञानं भवति।

---

१. अव्याप्तिर्नाम-लक्ष्यैकदेशावृत्तित्वम्, लक्ष्यैकदेशे लक्ष्यतावच्छेदकाश्रयीभूत-क्वचिल्लक्ष्ये लक्षणासत्त्वमव्याप्तिरित्यर्थः। यथागोर्नीलरूपवत्त्वं लक्षणं कृतं चेल्लक्ष्यतावच्छेदकाश्रयीभूतश्वेतगवेऽव्याप्तिस्तत्रनीलरूपाभावात्।

अतिव्याप्तिर्नाम—अलक्ष्ये लक्षणसत्त्वम् यथा—गोः शृङ्गित्वं लक्षणं कृतं चेल्लक्ष्यभूत - गोभिन्न - महिष्यादावतिव्याप्तिस्तत्रापि शृङ्गित्वस्य विद्यमानत्वात्।

असम्भवो नाम—लक्ष्यमात्रे कुत्रापि लक्षणासत्त्वम्। यथा गोरेकशफवत्त्वं लक्षणं कृतं चेत् गोसामान्यस्य द्विशफवत्त्वेन एकशफवत्त्वस्य कुत्राप्यसत्त्वादसम्भवः। ( त० सं० न्या० बो० टी० )॥ इति॥

तदेव हि लक्षणं यदव्याप्त्यतिव्याप्त्यसम्भवरूपदोषत्रयशून्यं यथा—गोः सास्नादिमत्त्वम्। अव्याप्तिश्च लक्ष्यैकदेशावृत्तित्वम्, अतएव गोर्न कपिलत्वं लक्षणं तस्याव्याप्तिग्रस्तत्वात्।

अतिव्याप्तिश्च लक्ष्यवृत्तित्वे सत्यलक्ष्यवृत्तित्वम्। अतएव गोर्न शृङ्गित्वं लक्षणं तस्यातिव्याप्तिग्रस्तत्वात्।

असम्भवश्च लक्ष्यमात्रावृत्तित्वम्। यथागोरेकशफवत्त्वं न लक्षणं तस्यासम्भवग्रस्तत्वात्। ( त० सं० पद० टी० )॥ इति॥

वृक्षवृत्तेर्वृक्षत्वजातेरवयवानां शाखापत्रपुष्पादीनां समारोहपरिणाहादिनाऽभिव्यक्तिर्भवति।

स्पष्टीकृतञ्चैतद् जातेर्लक्षणं भगवता वार्तिककारेण कात्यायनेन आकृतिग्रहणा जातिरिति ब्रुवता[1]।

गृह्यतेऽनेनेति ग्रहणं व्यञ्जकम्, ग्रहेः करणे ल्युट् सामान्ये नपुंसकम्। आकृतिर्ग्रहणं यस्याः सा, आक्रियते व्यावर्त्यते व्यक्तिरनया सा आकृतिरवयवसंस्थानविशेषः।

अनेन हि जातिरभिव्यज्यते यथा—कम्बुग्रीवादिमत्या आकृत्या घटगता घटत्वजातिरभिव्यक्ता भवति। गोवृक्षादिगतयाऽऽकृत्या गोत्ववृक्षत्वादिरूपा जातिः प्रकाश्यते।

द्वितीयं लक्षणन्तु असर्वलिङ्गत्वे सति एकस्यां व्यक्तौ कथनात् व्यक्त्यन्तरे कथनं विनापि सुग्रहात्वरूपम्। यथा—मनुष्यत्वव्याप्यब्राह्मणत्वक्षत्रियत्वादिकम्।

तत्र हि मनुष्यत्वं यद्यप्याकृत्या गृह्यते इति तत्प्रथमलक्षणलक्ष्यं तथापि तद्व्याप्यं ब्राह्मणत्वादिकं न अनुगतसंस्थानेन ग्रहीतुं शक्यते इति।

अयं ब्राह्मणः, अयं क्षत्रियः, अयं शूद्र इति लोकव्यवहारेणैव ग्रहीतुं शक्यम्। तत्र ब्राह्मणादि शब्दा असर्वलिङ्गा तद्वाच्या ब्राह्मणत्वादिजातिरेकस्यां व्यक्तौ उपदिष्टा सती व्यक्त्यन्तरे तदीय पितृपितामहादौ कथनं विनापि सुगृहीता भवति।

नहि अब्राह्मणस्य पुत्रो ब्राह्मणो भवतीति पितृपितामहादिघटितायां तदोयोर्ध्वपरम्परायां ब्राह्मणत्वं निश्चितमेव इति[1]।

शूद्रत्व जातौ त्वधःपरम्परायां व्यक्त्यन्तरे तन्निश्चयः बोद्धव्यः[2]। नतूर्ध्वपरम्परायां यतो हि "तुषजकनामकः कश्चन शूद्रः तस्य पुत्रः

---

१. "आकृतिग्रहणा जातिर्लिङ्गानाञ्च न सर्वभाक्"।
( म० भ अ० ४, पा० १, सू० ६३ वा० ) ॥ इति ॥

१. ब्राह्मणत्वन्तु एकत्रोपदिष्टे तत्पित्रादिषु सुग्रहम्। (लघु श० शे०) ॥इति॥

२. वृषलत्वन्तदपत्यतत्सहोदरादौ सुग्रहम्। ( लघु श० शे० ) ॥ इति ॥

बुसज़क:" यद्यपि शूद्रः सम्भवति तथापि तत्पित्रादयः शूद्रा एवं इति निर्णेतुं न शक्यते।

इत्येवं रीत्यां ब्राह्मणत्वादीनां निर्णयो द्वितीयलक्षणेन कर्तव्यः।

इदमेव द्वितीयं लक्षणं कृतं भगवता वार्तिककारेण तदेव प्रपञ्चितं महर्षिपतञ्जलिना स्वकीये महाभाष्ये चतुर्थाध्याये प्रथमपादे[1] ॥

तृतीयं लक्षणन्तु-आतिदेशिकं जातिलक्षणं तावद् वर्तते। किं वा स्वशास्त्रमात्रकार्योपयोगि विद्यते।

यतो हि—अपत्यप्रत्ययान्तस्य शाखाध्येतृ-वाचिनश्च जातिप्रयुक्तः कार्यातिदेशोऽनेन क्रियते।

अपत्यप्रत्ययान्तः शाखाध्येतृवाची च शब्दो जातिकार्यं लभत इत्यर्थकरणात् चतुर्थपादस्य[2]।

अस्य तृतीय लक्षणस्यावश्यकता अस्माद् कारणादागता यद् ये शब्दा अपत्यप्रत्ययान्तास्सन्ति।

अथ च ये शब्दाः शाखाध्येतृवाचिनस्सन्ति तत्रापि जातिकार्यं यथा भवेत्।

उदाहरणं यथा—औपगवी। कठी। इति।

यतोह्यत्रानुगतसंस्थानव्यङ्ग्यात्वस्याऽभावोऽस्ति। अथ चोभयत्र सर्वलिङ्गताऽपि विद्यते।

अतस्तृतीयलक्षणस्यावश्यकता जाता। तदपि वार्तिककृता विरचितमेव[3]। अत्रविषये लक्षणत्रयमिति "श्री भट्टोजिदीक्षिताः कथयन्ति" तथा हि:—

---

१. लिङ्गानाच्च न सर्वभाक् सकृदाख्यातनिर्ग्राह्या।
(म० भा० अ० ४, पा० १, सू० ६३) ॥ इति ॥

२. गोत्रं च चरणैः सह।
(म० भा० अ० ४, पा० १, सू० ६३) ॥ इति ॥

३. गोत्रं च चरणैः सह।
(म० भा० अ० ४, पा० १, सू० ६३) ॥ इति ॥

१. आकृतिग्रहणा जातिरित्येकं लक्षणम् ।

२. लिङ्गानाञ्च न सर्वभाक् सकृदाख्यातनिर्ग्राह्या. इति द्वितीयं लक्षणम् ।

३. गोत्रं च चरणैः सहेति तृतीयं लक्षणम् ।

अत्र तृतीयलक्षणेऽपत्याधिकारादन्यत्र लौकिकं गोत्रं ग्राह्यमिति गोत्रपदेन अनन्तरापत्य-गोत्रापत्य-युवापत्यानि गृह्यन्ते । अतएव भट्टोजि-दीक्षितेन व्याख्यातमपत्यप्रत्ययान्त इति ।

उदाहृतञ्च—"औपगवीति[1]" ।

तत्र च औपगवस्य अपत्यं स्त्री इत्यर्थे "अत इञ् " इति इञ् तस्य चानेन न्यासेन लुकि कृते अण्णान्तलक्षणो ङीप् न प्राप्नोति । गोत्राणां चार्थद्वारेण युव प्रत्ययार्थं प्रतिविशेषणत्वेन उपसर्जनत्वात् ।

न च अण्णान्तात् अनुपसर्जनात् इत्याद्यर्थेन अत्र न दोषः । प्रत्यये लुप्तेऽपि यः शिष्यते इति न्यायेन प्रकृतेरेव अणन्तरुपायायाः तदर्थबोधकत्वेन तदन्तस्य अनुपसर्जनत्वादिति वाच्यम् ।

"औपगवीभार्यः" इत्यत्र तावताऽपि जातिलक्षणस्य पुंवत्व-निषेधस्य अप्राप्तेः । यदि तत्र वृद्धिनिमित्तस्य इति प्रतिषेधो विभाव्यते तदा "ग्लुचुकायनीभार्यः" इत्यत्र स दोषो बोध्यः इत्यादि स्पष्टीकृतम् "एको गोत्रे[3]" इति सूत्रे भाष्ये ।

अनेन युवापत्यस्य जातित्वाभावः स्फुटमायाति अन्यथा जातिलक्षणो ङीप् एव परत्वात् प्राप्तः पुंवत्वप्रतिषेधश्च न प्राप्तः इति तदंशे भाष्यासंगतिः स्यात् ।

"ब्राह्मो[4] जातौ" इति सूत्रेऽपत्यजातौ न इत्यर्थोऽपि एतन्मते

---

१. वैया० सिं० कौ०, स्त्री० प्र० जातेरस्त्रीति सूत्रम् ।

( अ० ४, पा० १, सू० ६३ ) ।। इति ।।

२. पा० सू० अ० अ० ४, पा० १, सू० ६५ ) ।। इति ।।

३. "एको गोत्रे" ( पा० अ० अ० ४, पा० १, सू० ६३ ) ।। इति ।।

४. "ब्राह्मो जातौ" ( पा० अ० अ० ६, पा० ४, सू० १७१ ) ।। इति ।।

एव संगच्छते। अन्यथा अपत्यस्य जातित्वाव्यभिचारे तदसङ्गतिः "ब्राह्मो नारदः" इत्यसिद्धिश्च स्यात्[1]।

अत्र उपगुशब्दात् अनन्तरापत्ये गोत्रापत्ये वा अण् प्रत्ययः "टिड्ढा०[2]" इति ङीपं बाधित्वा "जातिलक्षणोङीप्[3]"।

श्रीनागेशस्तु अपत्यं पौत्रप्रभृतिगोत्रमिति परिभाषितं गोत्रापत्यमेव अत्रगोत्रपदेन गृह्णन् अन्यापत्यद्वयं व्यावर्तयति[4]।

भाष्यञ्च प्रमाणतया उपस्थापयति[5]--तथा हि – गोत्राद्युव-स्त्रियामिति सूत्रे स्त्रियामिति योगं विभज्य "स्त्रियां वाच्यायां" युवप्रत्ययो न भवति।

इत्यर्थेन "युवस्त्रियां" वाच्यायां युवप्रत्ययस्य निषेधे युवसंज्ञया गोत्रसंज्ञायाश्च बाधेन गोत्रार्थकप्रत्ययस्यापि अप्राप्तौ अपत्यप्रत्ययान्तेन युवस्त्रियाः अभिधानं न स्यात् इत्याशङ्क्य अस्त्रियामित्यस्य स्थाने स्त्रियां लुक् इति न्यासः कृतो भाष्यकृता।

प्राचीनास्तु गोत्रपदेनापत्यसामान्यं स्वीकुर्वन्ति, तत्र त्रीणि प्रमाणानि सन्ति। तथा हि :—

१. "गोत्रे कुञ्जादिभ्यश्च्फञ्" इति गोत्राधिकारान्तेऽपत्यम् पौत्र-प्रभृति गोत्रम् इति गोत्रसंज्ञाप्रणयनरूपं प्रथमम् प्रमाणम्[6]।

---

१. "जातेरस्त्रीविषयादयोपधात्" इति सूत्रे ( पा० अ० अ० ४, पा० १, सू० ६३ ) लघुशब्देन्दुशेखरे स्त्रीप्रत्ययप्रकरणे ॥ इति ॥

२. "टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः" ( पा० अ० अ० ४, पा० १, सू० १५ ) ॥ इति ॥

३. "जातेरस्त्रीविषयादयोपधात्" ( पा० अ० अ० ४, पा० १, सू० ६३ ) ॥ इति ॥

४. "अपत्यं पौत्रप्रभृति" ( पा० अ० अ० ४, पा० १, सू० १६२ ) इति परिभाषित इति शेषः ( ल० श० शे० स्त्री० प्र० प्र० जा० सू० ) ॥इति॥

५. "एको गोत्रे" ( पा० अ० अ० ४, पा० १, सू० ९३ ) सू० व्या० म० भा० ) ॥ इति ॥

६. ( क ) ( पा० अ० ४, पा० १, सू० ९८, पा० सू० व्या० म० भा० ) ॥ इति ॥

( ख ) ( पा० अ० अ० ४, पा० १, सू० १६२, व्या० म० भा० ) ॥ इति ॥

२. द्वितीयञ्च अपत्याधिकारात् परं लौकिकम् गोत्रम् ॥ इति ॥ "यूनि लुक्" इति सूत्रस्थं भाष्यम् अपत्याधिकारात् परं लौकिकं गोत्रमित्येवं रूपम्[1]।

३. तृतीयन्तु अनन्तरापत्यप्रत्ययान्ते अवन्तेः अपत्यम् स्त्री इत्यर्थं अवन्ती शब्दे जाति प्रयुक्तो ङीप् इत्याद्यर्थकं भाष्यम्[2] ॥

## १—(घ) अत्रयुक्तायुक्तत्वविमर्शः

उक्तयोः द्वयोः मतयोः मध्ये प्राचीनमतमेव रोचयामहे। उक्त-प्रमाणत्रितयात्।

न चैवं "ब्राह्मो जातौ" इत्यत्रापत्ये जातौ ब्रह्मणस्टिलोपोन इत्यर्थाऽसङ्गतिः नारदेऽर्थे ब्राह्मण इति प्रयोगस्य असङ्गतिश्चेति वाच्यम् ?

तत्र जातौ इत्यस्य समुदायोपाधितया "अपत्यप्रत्ययान्तेन ब्राह्मणत्व-जातिश्चेत् न गम्यते तदा टिलोपः"।

इत्यर्थस्वीकारेणादोषात्।

अन्यथा नव्यमतेऽपि ब्रह्मणो गोत्रापत्यम् - शूद्रश्चेत् तत्रापि ब्राह्मणः इति प्रयोगापत्तिः। तत्र अजातौ इति निषेधेन टिलोपाऽप्राप्तेः।

मन्मते तु शूद्रे वाच्ये समुदायेन ब्राह्मणत्वं नैव अवगम्यते इति निषेधाप्राप्त्या टिलोपे सति ब्राह्मणः इत्येव भवति।

"एको गोत्रे" इति सूत्रीयं भाष्यं तु उक्तभाष्यत्रितयविरोधात् एकदेश्युक्तिरूपमिति न तदिष्टसाधकम् ॥

## १—(ङ) मुनित्रयसम्मते लक्षणे नागेशभट्टकृतं व्याख्यानम्

श्रीनागेशभट्टास्तु उक्तलक्षणद्वयस्य स्थाने स्वकीये "लघुशब्देन्दु-शेखरे" नामके ग्रन्थे एकमेव लक्षणं व्याचक्षन्ते—तथा हि—आकृतिग्रहणेत्यत्र आकृतिपदम् अजहत्स्वार्थलक्षणया जातिग्राहकोपदेशस्यापि बोधकम्।

---

१. ( पा० अ० अ० ४, पा० १, सू० ९०, व्या० म० भा० ) ॥ इति ॥
२. ( पा० अ० अ० ४, पा० १, सू० १४, व्या० म० भा० ) ॥ इति ।

तेन आकृतिद्वारा साक्षात् वा जातिग्राहकोपदेशेन ग्राहकत्वं जातेः एकमेव लक्षणम् ।

यथा—ईदृशाकारो गौः इति आकृत्युपदेशग्राह्या जातिः गोत्वादिरूपा । अयं ब्राह्मणः इति साक्षात् तादृशोपदेशग्राह्या ब्राह्मणत्वादिजातिः ।

"लिङ्गानाञ्च न सर्वभाक्" इत्यंशस्तु तत्स्वरूपमनुवदति न तु लक्षणघटकत्वमनुभवति[1] ।

अतश्च मीमांसकमते शुक्लादि-गुणानामेकत्वेऽपि न तत्र जातित्वम् ।

अतएव च "विशेषणानां चाऽजातेः" इति सूत्रे जातेः आविष्टलिङ्गत्वं स्वीकृतं भाष्यकृता[2] ।

एवञ्च तटं त्रिषु इत्यादिकं कोशवचनभाष्यविरुद्धत्वात् प्रामादिकमेव मन्तव्यम् ।

नन्वेवमेतन्मतेऽपि जातिग्राहकोपदेशस्योपलक्षणत्वे आत्माश्रयत्वापत्तिः । जातिलक्षणे जातेः प्रवेशादिति चेत् ?

उच्यते:—

स्वप्रयोजनेच्छीयज्ञाननिष्ठोद्देश्यतानिरूपितावच्छेदकता समानाधिकरणा या विशेष्यत्वाऽसमानाधिकरणप्रकारता तादृशप्रकारताज्ञानजनकत्व-स्वतादात्म्योभयसम्बन्धेनोपदेशविशिष्टस्यैवात्र जातिग्राहकोपदेशेन ग्रहणात् ।

अयं ब्राह्मण ईदृशाकारो गौरित्याद्याकारको य उपदेशस्तत्प्रयोजिका या अस्य गोत्वज्ञानं भवत्वित्याद्याकारिका इच्छा तदुद्देश्यता गोत्वज्ञाने तन्निरूपितावच्छेदकता विषयित्वसम्बन्धावच्छिन्ना गोत्वे तत्समाना-

---

१. "लिङ्गानाञ्च न सर्वभाक्" इति तत्स्वरूपानुवादकम् । तेन शुक्लादिगुणानामेकत्वेऽपि जातित्वाभावो बोधितः । ( ल० श० शे० ) ।। इति ।।

२. "आविष्टयलिङ्गाजातिर्यल्लिङ्गमुपादाय प्रवर्त्तते" उत्पत्तिप्रभृत्याऽऽविनाशान्न तल्लिङ्गं जहाति ।

( प० अ० अ० १, पा० २, सू० ५२, व्या० म० भा० ) ।। इति ।।

धिकरणः ताद्दशोपदेशजन्याऽयं गौरित्याद्याकारकज्ञानीयप्रकारता गोत्वनिष्ठा सा च विशेष्यत्वासमानाधिकरणाऽपीति तन्निरूपकज्ञान-जनकस्योक्तोपदेशस्य ग्रहणम्[1]।

एतच्च लक्षणं युवत्वं कुमारत्वादिकमपिजातितया ग्राह्यते इति नित्यानित्यसाधारणम्। अतएव युवतिर्जाया यस्य इति युवजानिः इत्यत्र पुंवद्भावः[2], भाष्यकृता प्रदर्शितः।

अत्र च सकृदाख्यातनिर्ग्राह्या इत्यनेन "एकत्वमनेकानुगतत्वञ्च" बोधितं यावद्द्रव्यभावित्वरूपम्।

अनित्य व्यावृत्तम् अन्यऋषिकृतं द्वितीयं लक्षणम् भाष्यकृता यत्प्रदर्शितम्। तदेकवाक्यतयाऽपि आकृतिग्रहणा इत्यादिकमेकमेव लक्षणं प्रतीयते।

इत्यपि उक्तं शेखरकृद्भिरेव[3] तथा हिः—

प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः।
असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः॥

अयं भावः सत्त्वस्य द्रव्यस्य गुणैः युगपत् (सह) प्रादुर्भावविनाशाभ्यां या तौ प्राप्नोति सा जातिः। यावद्द्रव्यभाविनी इति यावत्।

अनेन गोत्वब्राह्मणत्वाद्योः उभयोरपिसंग्रहः। अत्र लक्षणेऽपि असर्वलिङ्गामिति उक्तार्थकमेव न तु लक्षणान्तरमनुपयोगात्। बह्वर्था-मित्यनेनानेकव्यक्तिवृत्तित्वं सूचितम्[4]।

---

१. ( ल० श० शे० टी० पर्व० कृ० ) ॥ इति ॥

२. (स्त्रियाः पुंवद्भासित् पुंस्कादनूङ् समानाधिकरणे स्त्रियामपूरणी प्रियादिषु) ( पा० अ० अ० ६, पा० ३, सू ३४ ) ॥ इति ॥

३. "जातेरस्त्रीविषयादयोपधात्" ( पा० अ० अ० ४, पा० १, सू० ६३ ) ॥ इति ॥

४. "जातेरस्त्रीविषयादयोपधात्" ( पा० अ० अ० ४, पा० १, सू० ६३ ) इति सू० शेषे ल० श० शे० टी० ॥ इति ॥

एवञ्च नित्यत्वे सति एकत्वे सति अनेकानुगत्वरूपमिदं लक्षणं सम्पन्नम्। अतएव च "कः पुनरेतयोः जातिलक्षणयोर्विशेषः" यथा पूर्वं लक्षणं तथा कुमारीभार्यं इति भवितव्यम्, यथोत्तरं तथा कुमारभार्यं इति भाष्यग्रन्थे लक्षणमिति एकवचनमेव प्रयुक्तम्। आकडारसूत्रशेषेऽपि आकृतिग्रहणा जातिः इत्येवमुक्तं भाष्ये[1] इति।

## १—(च) अत्र युक्तायुक्तत्वविवेकः

"आकृतिग्रहणा" इत्यत्र लक्षणद्वयं यदुक्तं–"भट्टोजिदीक्षितादिभिः" प्राचीनाचार्यैः, तदेव मतं रोचते मह्यम्।

यतो हि शेखरकृतां मते उपलक्षणपरतया व्याख्यानेऽपि सूक्ष्मविमर्शेन वस्तुद्वयमेव इति लक्षणद्वयमेव निष्पद्यते।

अतएव आकृत्या जातिग्राहोपदेशेन वा ग्राह्या इति वा पदघटित-मुक्तं स्वयमेव श्रीनागेशभट्टैः[२]।

किञ्च लक्षणश्लोके "लिङ्गानाञ्च न सर्वभाक्" इत्यत्र "च" पद-मुपात्तम् वार्त्तिककृता।

भाष्येऽपि "प्रादुर्भावविनाशाभ्यामित्यस्य" 'लिङ्गानाञ्च न सर्वभाक्" इत्यनेन सह न विचारः कृतः।

अपितु आकृतिग्रहणा इत्यनेनैव सह। कुमारीभार्यं इति प्रयोग-कथनात्[३]।

अतएव 'कः पुनरेतयोः जातिलक्षणयोः विशेषः' इत्यादि भाष्यग्रन्थे द्विवचनान्तप्रयोगोऽपि न विरुद्धो भवति।

---

१. "आकडारादेका संज्ञा" ( पा० अ० अ० १, ४, सू० १ )॥ इति॥

२. "जातेरस्त्रीविषयादयोपधात्" ( पा० अ० अ० ४, पा० १, सू० ६३, ल० श० शे० )॥ इति॥

३. "जातेरस्त्रीविषयादयोपधात्" ( पा० अ० अ० ४, पा० १, सू० ६३, म० भा० ल० श० शे० )॥ इति॥

## २—अथ न्यायशास्त्रदृष्ट्या जातेर्लक्षणम्

व्याकरणशास्त्रीयं लक्षणमुक्त्वा, इदानीं न्यायशास्त्रदृष्ट्या जातेर्लक्षणंनिरूप्यते। समानाकारं बुद्धिजननयोग्यो यो धर्मविशेषो नित्यः अनेकार्थ-समवेतश्च, तत्त्वं जातेर्लक्षणमुक्तं न्यायशास्त्रकृता महर्षिणा गोतमेन—

"समान प्रसवात्मिका जातिः" इति सूत्रयता[1], तद्भाष्यकृता वात्स्यायनेन च[2]। यतश्च समानः समानाऽऽकारकः प्रसवो बुद्धिजननमात्मा स्वरूपं यस्याः सा इति विग्रहः उक्तसूत्रस्य—

नन्वेवं "नित्यानेकसमवेतत्वमिदानीम्" यावत् सूत्राक्षरैर्नोपलब्धम्, कथङ्कारं भाष्यकृता तल्लक्षणे निवेशितमिति चेद् ?

उच्यते :—

समानाकारबुद्धिः "घटोऽयं घटोऽयमित्येतद्रूपा" लौकिकप्रत्यक्षात्मिका तत्र विषयविधया जातेर्हेतुत्वसम्भवेन लौकिकप्रत्यक्षविषयमात्रसमवेतत्वम्, घटत्वादिजातेर्लक्षणमिति विशेषलक्षणमायातम्।

तत्र च घटत्वादीनां नित्यत्वे सत्येव तादृशबुद्धिजनकत्वं सम्भवति नत्वनित्यत्वेः—

तथा हि—घटादिगताः तद् व्यक्तित्वादि धर्माः प्रतिघटं भिन्ना अनित्याश्च।

कथं सर्वेषु घटेषु अनुगताः स्युः ? अनुगतानां च तद्व्यक्तित्वादिधर्माणां तादृशबुद्धिजनकत्वं नैव सम्भवति।

अतो घटत्वादीनां सर्वघटानुगतानां नित्यानामेव तादृशबुद्धिजनकत्वसम्भवेन नित्यत्वे सति अनेकसमवेतत्वमिति जातिसामान्यलक्षणं निस्सरति।

समानाकारबुद्धिजननयोग्यत्वञ्च स्वरूपकथनपरमेव न तु लक्षणे निविष्टं फलाभावात् इत्येतत् सर्वम् स्फुटीकृतं न्यायसूत्रविवरणे[3]।

---

१. ( न्या० द० अ० २, आ० २, सू० ६८ ) ॥ इति ॥

२. ( न्या० द० अ० २, आ० २, सू० ६८ ) ॥ इयि ॥

३. ( न्या० सू० वि० अ० २, सू० ६७ ) ॥ इति ॥

अत्र लक्षणे "नित्यत्वेसत्यनेकसमवेतत्वम्" संयोगादिष्वपि अस्ति, अत उक्तलक्षणस्य अतिव्याप्तिः स्यात्। तेषामपि—अनेकसमवेतत्वात्। अतः सत्यन्तं दलं देयम्। नित्यत्वे सति समवेतत्वमित्येव लक्षणे क्रियमाणे तु गगनपरिमाणादिष्वपि अतिव्याप्तिः स्यात्। अतः अनेक इति पदमुपात्तम्।

ननु तावताऽपि "नित्यत्वे सत्यनेकवृत्तित्वमित्येव लक्षणं क्रियताम्" किमिति समवायसम्बन्धनिवेशेन इति चेन्न ?

अत्यन्ताऽभावस्यापि तादृशत्वेन तत्र लक्षणमतिप्रसक्तं स्यादिति वृत्तिसामान्यत्वं विहाय समवायसम्बन्धावच्छिन्नवृत्तित्वमुपात्तम्।

एवञ्च नित्यत्वसमानाधिकरणानेकनिरूपितसमवायसम्बन्धावच्छिन्न-वृत्तिताश्रयत्वम् सामान्यत्वमित्यायातम्।

अत्रानेकत्वम्—एक भिन्नत्वम्, तच्च स्वसमानाधिकरणयत्किञ्चि-देकत्वावच्छिन्नप्रतियोगिताकभेदवत्वं रूपम्, समभिव्याहृतपदार्थ-सम्बन्धितिष्ठयत्किञ्चिदेकत्वावच्छिन्न - प्रतियोगिताकभेदवद्बोधकताया अनेकपदस्याङ्गीकारात्।

तथा च स्वसमानाधिकरणयत्किञ्चिदेकत्वावच्छिन्नप्रतियोगिताक-भेदवत्समवेतत्त्वं पर्यवसन्नम्, स्वं लक्ष्यत्वेनाऽऽभिमतं घटत्वादि, एकत्वं च तद् व्यक्तित्वादि, तस्य च न तत्तद्व्यक्तित्वत्वेनानेकपदार्थशरीरे प्रवेशः, अननुगतत्वात्।

किन्तु स्वसमानाधिकरणाऽव्यासज्यवृत्तिधर्मत्वेन। एवं च स्वाधि-करणवृत्तियत्किञ्चिदव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदवत्समवे-तत्वमिति फलितम्। भवति च घटत्वाधिकरणेषु घटेषु वर्तमानो यस्य कस्यचिद् अव्यासज्यवृत्तिधर्मावच्छिन्नस्य गगनादिव्यक्तिविशेषस्य भेदः तद्वद्घटेषु समवायेन वर्तमानत्वं घटत्वस्येति[1]।

व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकैकदेशवृत्तिधर्माऽवच्छिन्नप्रति-योगिताकभेदस्याऽनभ्युपगमेन घटत्वाधिकरणेषु घटेषु तद्घटव्यक्तिभेदस्तु न गृह्यते एवेति।

---

१. ( न्या० सि० मु० कि० टि० प्र० ख० का० ८ सा० नि० प्र० ) ॥ इति ॥

अथवा एकत्वावच्छिन्नप्रतियोगिताकायावन्तो भेदाः यथासम्भवं तावदाश्रयसमवेतत्वमित्यर्थः।

अथवा स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टत्वमनेकसमवेतत्वम्। यथा घटे घटभेदंवत्ति घटान्तरे च घटत्वं वर्तते, स्वं घटभेदः तत्प्रतियोगिघटवृत्तित्वं घटत्वे पुनः स्वं घटभेदः तदनुयोगिघटान्तरवृत्तित्वं घटत्वे, इत्युभयसम्बन्धेन घटभेदविशिष्टत्वमेव घटत्वेऽनेकसमवेतत्वम्।

अथवा स्व ( घट ) वृत्तित्व—स्वभिन्न ( घटान्तर ) वृत्तित्वोभयसम्बन्धेन यत्किञ्चिद् ( घट ) विशिष्टत्वम् घटत्वेऽनेकसमवेतत्वम्।

अथवा स्व ( तद्व्यक्तित्व ) समानाधिकरण्य, स्वाभाव ( तद्व्यक्तित्वाभाव ) समानाधिकरण्योभयसम्बन्धेन किञ्चिद् ( तद्व्यक्तित्व ) विशिष्टत्वनेकसमवेतत्वम्। सर्वत्र वृत्तित्वं समवायेन बोध्यमिति दिक्[1]।

## २—(क) वैशेषिकसम्मतं जातिलक्षणम्

वैशेषिकनये तु अनेकवृत्तित्वे सति यदेक, द्वि, बहुषु आत्मस्वरूपानुगमप्रत्ययकारणं तत्सामान्यमिति लक्षणं[2] सिद्धान्तितम्।

एतन्मूलन्तु "स्वविषयसर्वगतमभिन्नात्मकमनेकवृत्ति एक, द्वि बहुष्वात्मस्वरूपानुगमप्रत्ययकारि" इति भाष्यम्[3]॥

## २—(ख) तत्सम्मतं जातिभेदनिरूपणम्

एवञ्च द्रव्यगुणकर्मसु अविशिष्टा सत्सदिति प्रत्ययानुवृत्तिः द्रव्यादिभिन्नात्पदार्थात् भवितुमर्हतीति योऽसौ भिन्नः पदार्थः तत्सत्तारूपं सामान्यमेव इदमेव परं सामान्यमित्यप्युच्यते, एवमेव द्रव्यत्वगुणत्वकर्मत्वादिरूपं सामान्यमपरमित्युच्यते। तच्च परस्परविशिष्टेषु पृथिव्यादिषु अनुवृत्तिप्रतीतिकारणत्वात्।

---

१. ( न्या० सि० मु० कि० टी० प्र० ख० का० ८ सा० नि० प्र० )॥ इति॥
२. ( न्या० क० टी० पृ० सं० ३१३ )॥ इति॥
३. ( वै० द० प्र० पा० भा० पृ० सं० ३११॥ इति॥

सामान्यं गुणकर्मादिभ्यः जातीयेभ्यः व्यावृत्तिप्रतीतिजनकतया विशेषः ( व्यावर्तकः ) इत्यप्युच्यते।

सत्ताभिन्नेषु सर्वद्रव्यत्वादिनिखिलजातिषु परत्वापरत्वभेदेन द्वैविध्यं भवति[१]।

## २—(ग) जातिज्ञानोपाय-निरूपणम्

ननु सुवर्णरजतादिषु द्रव्यत्वबुद्ध्युदयेऽपि घृत-जतु-प्रभृतिषु सार्वजनीनायाः द्रव्यत्वबुद्धेरनुदयात् तज्जातिबोधे किं प्रमाणमिति चेदुच्यते :—

समवायसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यतानिरूपिततादात्म्य-सम्बन्धावच्छिन्ना द्रव्यनिष्ठा या कारणता सा यत्किञ्चिद्धर्मावच्छिन्ना, कारणतात्वात्। या या कारणता सा सा यत्किञ्चिद्धर्मावच्छिन्ना, घटनिष्ठकार्यतानिरूपितकपालनिष्ठकारणतावत्, इत्यनुमानेन निरवच्छिन्नायाः कारणताया असम्भवात्, द्रव्यनिष्ठकारणतायां किञ्चिद्धर्मावच्छिन्नत्वसिद्धौ यद्धर्मावच्छिन्ना सा कारणता स धर्मः कारणतातः अन्यूनातिरिक्तवृत्तिर्भवितुमर्हतीति द्रव्यत्वरूपो धर्म एव तादृशो वरणीयः। उक्तानुमाने हेतुतायाः साध्यतायाश्चावच्छेदकः स्वरूपसम्बन्धः।

कारणतावच्छेदकीभूते चात्र द्रव्यत्वरूपे धर्मे उक्तजातिलक्षणस्य संघटनात् जातित्वप्रतिबन्धकदोषाणामत्रासम्भवाच्च द्रव्यत्वस्य जातित्वं पर्यवस्यति[२]।

---

१. (क) (वै० द० प्र० पा० भा० द्र० नि० उ० प्र० पृ० सं० ११) ॥ इति ॥
(ख) (प्र० पा० भा० सा० प० नि० पृ० सं० ३१२ ) ॥ इति ॥

२. (क) ( न्या० सि० मु० प्र० पृ० सं० ३३/३४ ) ॥ इति ॥
(ख) ( न्या सि० मु० कि० टी० ) ॥ इति ॥
(ग) ( न्या० सि० मु० रा० रु० टी० ) ॥ इति ॥

 

## २—(घ) अस्य लक्षणस्य शाब्दिकलक्षणेन सह तुलनात्मकविमर्शः

न्यायसम्मतमेतल्लक्षणन्तु विभिन्नकालिकानेकसमवेतेष्वपि नित्य-धर्मेषु समन्वेति ।

यथा :—

नरसिंहत्वधर्मे, स हि अनेककल्पसम्बन्ध्यवतारभूतेषु नरसिंहशरीरेषु वर्तते ।

अतो न नरसिंहशरीरे नरत्वसिंहत्वजात्योः साङ्कर्यंप्रयुक्तो जातित्व-बाधः ।

शाब्दिकचक्रचूडामणयः श्रीनागेशभट्टास्तु समानकालिकानेकसमवेत एव धर्मो जातिरिति स्वीकुर्वन्ति ।

अतः नरसिंहत्वम्, चैत्रत्वम्, मैत्रत्वम्, देवदत्तत्वादिकं वा जाति-रूपतया नाभ्युपगच्छन्ति ।

अतएव "चैत्रत्वविशिष्टा चैत्री" इत्यत्र "जातेरस्त्रीविषयादयोपधात्[1]" इति "ङीष्" न भवति ।

न्यायनये तु नैतत्सिद्धयेत् ।

एवञ्च लक्षणेऽनेकसमवेतेत्यत्रानेकपदार्थे समानकालिकत्वमिति विशेषणं देयम् । "आकृतिग्रहणा जातिः" इति वार्तिककृल्लक्षणन्तु आकृतिर्जातिलिङ्गाख्या इति न्यायसूत्रेण—एकवाक्यतामाप्नोत्येव ।

इदञ्च न्यायसम्मतं लक्षणम् "आकृतिग्रहणा जातिः" इति "सकृदा-ख्यातनिर्ग्राह्या" इति च लक्षणद्वयस्य प्रतिनिधित्वं ग्राहयतीति प्रतीयते ।

---

१. जातेरस्त्रीविषयादयोपधात् । ( अ० ४, पा० १, सू० ६३) ।। इति ।।

## ३—अथ पूर्वमीमांसासम्मतं जातेर्लक्षणम्

तदुक्तं मानमेयोदये :—

जातिर्व्यक्तिगता नित्या प्रत्यक्षज्ञानगोचरा।
भिन्नाभिन्ना च सा व्यक्तेः कुमारिलमते मता[१] ॥ इति ॥

प्राभाकरास्तु आकृतिग्रहणानां घटत्वपटत्वादिजातीनां सिद्धावपि जात्यवबोधस्य पूर्वाकारावमर्शनियतत्वत्तदभावेन सत्त्वशब्दत्वब्राह्मणत्वादीनां जातित्वाभावमाहुः[२]।

"नित्यमेकमनेकानुगतं सामान्यमिति" गौतमीयैः काणादैश्चाभ्युपेतं जातिलक्षणं मीमांसकैरप्यभ्युपेयत एव। तथा हि—प्रागुक्ते पद्ये 'नित्या' इत्युक्तम्।

एकत्वञ्च प्रत्यक्षज्ञानगोचरा इत्यतो लब्धम्। तथा हि—घटोऽयम्, घटोऽयमित्यनुगतैकाकारप्रत्यक्षेषु जातिरेका उपलभ्यते इति[३]।

अनेकानुगतत्वमप्यस्याः प्रत्यक्षादेव सर्वव्यक्तिष्वनुगतात् सिध्यति। इयांस्तु विशेषो गौतमीयैर्जातिव्यक्त्योः समवायोऽभ्युपगम्यते। मीमांसकैस्तु तादात्म्यमिति[४]।

तादात्म्यञ्च भेदाभेदौ। तदेतदुक्तम्—भिन्नाऽभिन्ना च सा व्यक्तेरिति। तादात्म्यञ्च जातिव्यक्त्योः सामानाधिकरण्यप्रत्ययात् सिध्यति। स च प्रत्ययः घटोऽयम्, पटोऽयम्, कुड्यमिदमित्यादि।

अत्रेदं पदेन व्यक्तिरुच्यते। घटादिपदेन तु जातिः। अत्यन्तभेदे गौरश्व इत्यादौ, अत्यन्ताऽभेदे च घटो घट इत्यादौ सामानाधिकरण्यप्रत्ययाभावादत्र जातिव्यक्त्योर्भेदाभेदरूपं तादात्म्यं स्वीक्रियते।

---

१. ( मा० मे० जा० प्र० पृ० सं० २२६ ) ॥ इति ॥
२. ( मा० मे० जा० प्र० पृ० सं० २३५ ) ॥ इति ॥
३. ( मा० मे० जा० प्र० पृ० सं० २२६ ) ॥ इति ॥
४. ( मा० मे० प्र० प्र० पृ० सं० १४ ) ॥ इति ॥

तयोरेतादृशं तादात्म्यमनुमानेनापि साधितम्[1]। अद्वैतसिद्धौ गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकरणप्रत्ययविषयत्वात्। व्यतिरेके गवाश्वादिवदिति[2]। समवायस्तु जात्यादेर्व्यक्त्यादौ सम्बन्धो मीमांसकैर्नं स्वीक्रियते। समवायस्य स्वरूपसम्बन्धेन व्यक्त्यादिवृत्तित्वे जात्यादेरेव स्वरूपसम्बन्धेन वृत्तित्वस्वीकारस्यौचित्यात्[3] ॥

---

१. ( मा० मे० जा० प्र० पृ० सं० २३३-२३५ ) ॥ इति ॥
२. ( अ० सि० प्र० परि० प्र० मि० नि० पृ० सं० १९ ) ॥ इति ॥
३. ( मा० मे० अ० प्र० पृ० सं० २९०/२९१ ) ॥ इति ॥

## ४—बौद्धदर्शने निरसनीयदृष्ट्या जातिस्वरूपविमर्शः

बौद्धास्तु चत्वारोऽपि प्रागुक्तलक्षणां जातिं नैव मन्यन्ते। तथा हि—जातिर्यद्यस्ति कश्चन भावः, तदा सा विभुत्वेन सर्वपदार्थसम्बद्धा, स्वाश्रयव्यक्तिमात्रसम्बद्धा वा? नाद्यः, सर्वपदार्थेषु गोत्वादिजातेः सत्त्वेन सर्वत्रापि गवादिबुद्धिप्रसङ्गात्। यदि तु परिच्छिन्नाऽतएवानित्या च जातिर्व्यक्तिसमसमयोत्पादिनी इत्युच्यते तदाऽपसिद्धान्तः। सर्वैरपि जातिवादिभिस्तस्या नित्यत्वस्य सर्वदेश-सर्वकालावस्थित-सर्वस्वाश्रयत्वेनाभिमतव्यक्तिसम्बद्धत्वस्य चाभ्युपगमात्। अत एव व्यक्त्यन्तरादागत्य व्यक्त्यन्तरे सम्बध्यते इत्यपि न वक्तुं शक्यते। निष्क्रियत्वाभ्युपगमाच्च निष्क्रमणावधौ तस्या अनुपलब्धिप्रसङ्गाच्च। व्यक्त्यन्तरादंशेनागत्य व्यक्त्यन्तरे संबध्यते इत्यपि वक्तुं न शक्यम्। तस्या निरंशत्वस्वीकारात्।

किञ्च स्वाश्रयव्यक्तिनाशे जातिस्तयैव सह विनश्यति, व्यक्तिनाशेऽपि निराश्रया तत्रैव तिष्ठति, व्यक्त्यन्तरं प्रति गच्छति वा? आद्ये तस्या नित्यत्वहानिः। द्वितीये तत्रानुपलब्धौ हेतुर्वक्तव्यः। तृतीये निष्क्रियत्वाभ्युपगमहानिः।

तदुक्तम् :—

> नायाति न च तत्रासीदस्ति पश्चान्नचांशवत्।
> जहाति पूर्वं नाधारमहो व्यसनसन्ततिः॥ इति[1]॥

एवं जातिं प्रागुक्तलक्षणां प्रत्याख्याय तस्याः स्थानेऽपोहमभिमन्यन्ते। अपोहपदार्थञ्चेदृशं वदन्ति। एकपिण्डदर्शने सति यः सर्वव्यक्तिसाधारण इव बहिरध्यस्यतोविकल्पबुद्ध्याकारो गोत्वादिरूपो विधिः भावः। स एवान्यापोहविशिष्टो जातिपदेन व्यवह्रियते। तदुक्तमपोहसिद्धौ :—

"नास्माभिरपोहशब्देन विधिरेव केवलोऽभिप्रेतः। नाप्यन्यव्यावृत्तिमात्रम्, किन्त्वन्यापोहविशिष्टो विधिः शब्दानामर्थः। ततश्च न प्रत्येकपक्षीयनिपाति दोषावकाशः" इति।

---

१. (प्रमा० वा० परि० ३/१५१/१५२)॥ इति॥

एतच्च जातिवादिभिः प्रत्याख्यातम् । तदुक्तमाचार्यवचनत्वेन मानमेयोदये :—

अगोनिवृत्ति समान्यं, वाच्यं यैः परिकल्पितम् ।
गोत्ववस्त्वेव तैरुक्तमगोपोहगिरा स्फुटमिति[1] ॥

---

१. ( मा० मे० जा० प्र० पृ० सं० २३ ) ॥ इति ॥

## ५—अथ पाणिनीयसूत्रेषु जातिनिर्देशः

१. विशेषणानां चाजातेरिति[1] ।

अस्यार्थः :—लुबर्थस्य विशेषणानामपि तद्वल्लिङ्गवचने स्तो जातिं वर्जयित्वा। उदाहरणं तु:—"पञ्चाला रमणीयाः" "गोदौ रमणीयौ" इति। प्रत्युदाहरणं तु—"पञ्चाला जनपदः" "गोदौ ग्राम" इति। अत्र जनपदत्वं जातिर्ग्रामत्वञ्च। अतो न जनपदग्रामयोर्यथायथं बहुवचनद्विवचने। अत्र जनपदत्वं नदीपर्वतादिरूपसीमासंनिवेशविशेष-रूपयाऽऽकृत्या गृह्यते। ग्रामत्वञ्च तया गृहारामादिसंनिवेशविशेषरूपया चाकृत्या गृह्यते। तथा च जातिलक्षणमत्राकृतिग्रहणा जातिरिति संघटितम्।

२. जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्[2] ।

अस्यार्थः :—जातेराख्याने एकोऽप्यर्थो वा बहुवद् भवति।

उदाहरणम् :—"ब्राह्मणाः पूज्याः" "ब्राह्मणः पूज्य इति।" अत्र पूज्यत्वेन ब्राह्मणत्व जातेराख्यानम्, न तु व्यक्तिविशेषस्य। व्यक्तिनिर्देश-कदमादिपदाभावात्। अत्र च जातिलक्षणम्। लिङ्गानाञ्च न सर्वभाक्। सकृदाख्यातनिर्ग्राह्या इति।

असर्वलिङ्गत्वे सति एकस्यां व्यक्तौ कथनाद् व्यक्त्यन्तरे कथनं विनाऽपि सुग्रहा जातिरिति तदर्थः। अत्र ब्राह्मणशब्दे ब्राह्मणो ब्राह्मणीति लिङ्गद्वयं वर्तते। नपुंसके तु ब्राह्मणजातौ प्रयोगो नोप-लभ्यते। न च नपुंसके ब्राह्मण्यमस्ति। नच व्यवह्रियते तत्तत्र। असंस्कृतत्वात्। न नपुंसकस्य, वेदानुवचनादावनधिकारात्। प्रयुक्ता-नाच्चेदमन्वाख्यानं व्याकरणमिति। शतपथब्राह्मणमित्यादि नपुंसक-प्रयोगस्तु वेदे, न तु ब्राह्मणजातौ। पितरि च ब्राह्मणत्वे कथिते पुत्रे तत्कथनं विनाऽपि अस्यायं पुत्र इति ब्राह्मणसम्बन्धकथनमात्रेण पुत्रे

---

१. ( पा० अ० अ० १, पा० २, सू० ५२ ) ॥ इति ॥
२. ( पा० अ० अ० १, पा० २, सू० ५८ ) ॥ इति ॥

ब्राह्मणत्वं गृह्यते। अयं ब्राह्मणो विद्वानित्यत्र तु व्यक्तेराख्यानमिति न बहुवद्भावः। तेषां निन्दा न कर्तव्या युगरूपा हि ब्राह्मणा इत्यत्रापि जात्याख्यायामेव तद्बहुवद्भावः॥

३. जातिरप्राणिनाम्[1]

अस्यार्थः :—प्राणिभिन्नगतजातिवाचिनां द्वन्द्व एकवत्।

उदाहरणम् :—"धानाशष्कुलीति"। धानाभृष्टयवे स्त्रिया-मित्यमरः। शष्कुली तु पूरिका लोके। पूरयति स्वस्मिन् चणक-द्विदल-पिष्टमिति। स्त्रीत्वं लोकात्। अत्र धानात्वं शष्कुलीत्वञ्च आकृतिग्राह्यं जातिद्वयं नच तत्प्राणिनिष्ठम्। प्राणिजातिवाचिनान्तु द्वन्द्वो नैकवत्। विट् शूद्रा इति। अत्र वैश्यत्वं शूद्रत्वञ्च लिङ्गानाञ्च न सर्वभाक्। सकृदाख्यातनिर्ग्राह्या इति जातिलक्षणलक्षितम्।

द्रव्यजाति वाचिनामेव द्वन्द्व एकवत्। नेह-रूपरसौ। अत्र रूपत्वं रसत्वञ्च गुणजाती। अत्र रूपत्वं रसत्वञ्च-असर्वलिङ्गत्वे सत्येकस्यां व्यक्तौ कथनाद् व्यक्त्यन्तरे कथनं विनाऽपि सुग्रहा जातिरिति लक्षण-लक्षितम्। एकस्यां व्यक्तौ कस्यचिद् रूपस्य रसस्य वा कथने व्यक्त्यन्तरे तस्य कथनं विनाऽपि सुग्रहत्वात्।

अयं भावः—यथा देवदत्तादावयं ब्राह्मण इति कथनेन तत्पितृपिता-महादिषु कथनं विनैव ब्राह्मणत्वं सुग्रहम्, तथैवात्रापि पटादावयं रूपवान्, शुक्लवान् वा इति कथनेन तत्कारणीभूततन्त्वादिष्वपि कथनं विनैव तद्वत्त्वनिर्णयः। ततः तद्गतरूपत्वजातेः रूपत्वव्याप्यशुक्लत्व जातेर्वा निर्णयः सुतरां एवं गमनाकुञ्चने इत्यत्रापि द्रव्यजाति-वाचित्वाभावाद् द्वन्द्वो नैकवत्। अत्र गमनत्वमाकुञ्चनत्वञ्च क्रिया-जाती सकृदाख्यात लक्षणलक्षिते एव। यतो हि एकत्र पिपीलिकादि-गमने, इदं गमनम् इति कथनेन गमनत्वे गृहीते व्यक्त्यन्तरेषु कथनं

१. (पा० अ० अ० २, पा० ४, सू० ६)॥ इति॥

विनाऽपि तत् सुष्ठु गृह्यते। जातिप्राधान्य एवायमेकवद्भावः। व्यक्ति-प्राधान्ये तु वदरामलकानि इत्यत्र तदभावः।

४. सुप्यजातौ णिनिस्ताच्छील्ये[1]

अस्यार्थः—जातिभिन्नार्थवाचके सुबन्ते उपपदे धातोर्णिनिः स्यात्ताच्छील्ये द्योत्ये।

उदाहरणम् :—"उष्णभोजी"—"शीतभोजी" इति। अत्रोष्णत्वं शीतत्वञ्च स्पर्शरूपो गुणो न तु जातिः। जातिवाचके सुबन्ते उपपदे तु न णिनिः, ब्राह्मणानामन्त्रयति इति। अत्र ब्राह्मणत्वं जातिः।

ब्रह्म-वेदः, तद् वदति इति ब्रह्मवादी। अत्र वेदचतुष्टयगतस्य ब्रह्मत्वस्य जातित्वेन सूत्रेण णिनेरप्राप्तौ ब्रह्मणि वद इति वार्तिक-मारब्धम्। यदि तु सूत्रेण प्राणिजातेरेव पर्युदास इति व्याख्यायते तदा वार्तिकं नारब्धव्यमिति बोध्यम्। वेदत्वम् आकृतिग्रहणा जातिरिति लक्षणलक्षितम्, वेदानुपूर्व्या लोकानुपूर्वीतो विलक्षणत्वात्।

५. पञ्चम्यामजातौ[2]

अस्यार्थः—जातिशब्दवर्जिते पञ्चम्यन्ते उपपदे जनेर्डः स्यात्।

उदाहरणम् :—संस्कारजः, अदृष्टजः, इति। यद्यपि संस्कारत्व-मदृष्टत्वञ्च गुणगते जाती तथापि व्याख्यानतो द्रव्यजातेरेवात्र पर्युदासः। ब्राह्मणज इत्यत्र तु द्रव्यजातिवाचकेऽपि उपपदे अन्येष्वपि दृश्यते इति ड प्रत्ययः। संस्कारत्वत्वमदृष्टत्वञ्च असर्वलिङ्गत्वे सति सकृदाख्यातनिर्ग्राह्यत्वरूपजातिलक्षणलक्षितम्।

यद्यपि देवदत्तादावयं ब्राह्मणः इति वत् अत्रायं संस्कारः इति संस्कारविषये प्रत्यक्षतो निर्देष्टुं न शक्यते। तथाऽप्ययं (देवदत्तादि) अस्ति संस्कारवान् ईदृशकार्यकर्तृत्वात्, इत्यादि रूपेण परार्थानुमानेन निर्देष्टुं शक्यते एव। ततश्च तादृशं कार्यरूपं लिङ्गं दृष्ट्वा अन्यत्रापि सः ज्ञातुं शक्यः। एवमेवादृष्टविषयेऽपि बोध्यम्।

---

१. (पा० अ० अ० ३, पा० २, सू० ७८)॥ इति॥
२. (प० अ० अ० ३, पा० २, सू० ९८)॥ इति॥

६. जातेरस्त्रीविषयादयोपधात्[1] ।

अस्यार्थः :—जातिवाचि यन्नच स्त्रियां नियतमयोपधं ततः स्त्रियां ङीष् स्यात् । अत्र त्रीणि जातिलक्षणानि :—

१. आकृतिग्रहणा-जातिर्लिङ्गानाञ्च न सर्वभाक् ।

२. सकृदाख्यातनिर्ग्राह्या ।

३ गोत्रञ्च चरणैः सह ।। इति ।।

आकृतिग्रहणा इत्यस्यानुगतसंस्थानव्यङ्ग्येत्यर्थः । असर्वलिङ्गत्वे सति एकस्यां व्यक्तौ कथनाद् व्यक्त्यन्तरे कथनं विनाऽपि सुग्रहा-जातिरिति लिङ्गानाञ्च न सर्वभाक् .सकृदाख्यातनिर्ग्राह्येत्यस्यार्थः । "गोत्रञ्च चरणैः सह" इत्यस्यापत्यप्रत्ययान्तः शाखाध्येतृवाची च जाति-कार्यं लभते इत्यर्थः । केचित्तु अपत्याधिकारादुत्तरत्रैव लौकिकं गोत्रं गोत्रशब्देन गृह्यते, नान्यत्रेति पारिभाषिकगोत्रप्रत्ययान्त एव जातिकार्य-लभते नत्वपत्यप्रत्ययान्तः "गोत्रञ्च चरणैः सह" इति वचनस्यापत्या-धिकारात्पूर्वभावित्वात् । तथा चापत्यार्थे औपगवीति ङीबन्त इति प्राचामुक्तिरेव समीचीनेत्याहुः ।

तत्र प्रथम लक्षणस्योदाहरणम् :—तटी, घटी, पटी, इत्यादि । द्वितीयस्योदाहरणम् :—वृषली । ब्राह्मणीत्यत्र जातित्वेऽपि ङीन्, शङ्र्गरवादित्वात् । तृतीयस्योदाहरणम् :— औपगवी, कठी, बह्वृची । तत्राद्यमपत्यप्रत्ययान्तम् । द्वे तु शाखाध्येतृवाचिनी । कठेन प्रोक्तां शाखामधीते इति ।

बह्व्यः ऋचोऽध्येतव्या अस्या इति च व्युत्पत्तिदर्शनात् । अनृच-बह्वृचावध्येतयेवेति वचनात् ऋक्पूरब्धूरिति 'अ'-प्रत्ययः समासान्तः । यद्यपि स्त्रीणां वेदाध्ययनं प्रतिषिद्धम्, अनुपनीतत्वात्, तथापि पुराकल्पे ह्येतदासीत् ।

---

१. ( पा० अ० अ० ४, पा० १, सू० ६३ ) ।। इति ।।

पुराकल्पे तु नारीणां मौञ्जीबन्धनमिष्यते ।
अध्यापनञ्च वेदानां सावित्रीवचनं तथा[1] ।। इति ।।

यमस्मृतिवचनात् । यद्वा मा नामाधिगीष्ट तद् वंश्यत्वन्ताच्छब्द्यं भविष्यति । तथाऽनधीयानेऽपि माणवके । अस्त्रीविषयात् किम्–बलाका । स्त्रीविषये एवेष्टेयं जातिः । अत्र बलाकावकपंक्तिविस-कण्ठिका कामुकी वा । अत्रार्थे बलाकाशब्दस्य नित्यस्त्रीत्वात् । तदुक्तं कोशे :—

बलाका वकपङ्क्तिः स्याद् बलाका बिसकण्ठिका ।
बलाका कामुकी प्रोक्ता वलाकश्च बको मत इति[2] ।।

अस्त्रीविषयादित्यस्य प्रवृत्तिनिमित्तैक्ये लिङ्गान्तररहितभिन्नादि-त्यर्थाद्, वके बलाकाशब्दस्य पुंस्त्वेऽपि न दोषः, प्रवृत्तिनिमित्तभेदात् । अत्र त्रिविधाऽपि बलाकात्व जातिः, आकृतिग्रहणा वोध्या ।

७. पाककर्णपर्णपुष्पफलमूलबालोत्तरपदाच्च[3] ।

अस्यार्थः :—पाकाद्युत्तरपदाज्जातिवाचिनः स्त्रीविषयादपि ङीष् । पूर्वसूत्राज्जातेरित्यनुवृत्तेः ।

ओदनपाकी । शङ्कुकर्णी । शालपर्णी । शङ्खपुष्पी । दासीफली । दर्भमूली । गोबाली । ओषधिजातिविशेषे रुढा एते शव्दाः । एताश्च जातयः "आकृतिग्रहणा जातिरिति" लक्षणलक्षिताः । अनुगतावयव-संस्थानव्यङ्ग्यत्वात् । एतासाम् आकृतयश्च चरक-भावप्रकाशग्रन्थेषु उपवर्णिताः । तत एव द्रष्टव्यम् ।

८. इतो मनुष्यजाते[4] ।

अस्यार्थः :—इकारान्तान् मनुष्यजादिवाचकाद् योपधादयोपधादपि ङीष् स्यात् । दक्षस्यापत्यं वा कन्या दाक्षी । योपधादपि-जातेरित्यनु-

---

१. यमस्मृतिः ।। इति ।।
२. इदं कोश वाक्यमुद्धृतं लघुशब्देन्दुशेखरे स्त्रीप्रत्ययप्रकरणे ।। इति ।।
३. ( पा० अ० अ० ४, पा० १, सू० ६४ ) ।। इति ।।
४. ( पा० अ० अ० ४, पा० १, सू० ६५ ) ।। इति ।।

वर्तमाने पुनर्जातिग्रहणात्—उदमेयस्यापत्यं गोत्रावत्यं वा औदमेयी कन्या। अनयोः 'गोत्रं च चरणैः सह, इति आतिदेशिकी जातिः।

९. ऊङुतः[1]।

अस्यार्थः :—उकारान्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूङ् स्यात्। कुरुः। कुरोरपत्यं गोत्रापत्यं वा इत्यर्थे 'कुरुनादिभ्योण्य' इति ण्यः। तस्य—स्त्रियां भवन्ति कुन्तिकुरुभ्यश्चेति सूत्रेण लुक्। तत ऊङ्। दीर्घः। अयं गोत्रप्रत्ययान्तो जाति शब्दः। तेन गोत्ररूपा जातिः। अयोपधात् किम्? अध्वर्युः इयं शाखाऽध्येतृरूपा जातिः।

अध्वर्युशाखाऽध्येत्री अध्वर्युशाखाध्यायिवंशोद्भवा वेत्यर्थः। एष्वपि पूर्ववदेव जातिः॥

१०. शाङ्गर्रवाद्यञो ङीन्[2]।

अस्यार्थः :—शाङ्गर्रवादेरञोयोऽकारस्तदन्ताच्च जातिवाचिनो ङीन् स्यात्। शाङ्गर्रवी। कापटवी। ब्राह्मणी। गौग्गुलवी। गौतमी। इत्यादीन्युदाहरणानि।

तत्र शुङ्गरुशब्दादपत्ये गोत्रापत्ये वाऽण् आदिवृद्धिः। ओर्गुणः। टिड्ढाणञ् इति ङीपं बाधित्वा परत्वाज्जातेरिति ङीषि प्राप्ते ङीन् विधीयते, तेन नित्यत्वादाद्युदात्तः। ङीषि तु प्रत्ययस्वरेणान्तोदात्तः स्यात्। शुङ्गुरूकपटु ब्रह्मन्, गुग्गुलु शब्देभ्यः "प्राग्दीव्यतोऽण्" अपत्ये गोत्रापत्ये वाऽथं। गोतमशब्दऋष्यणन्तोऽपत्ये गोत्राऽपत्ये वाऽर्थे। अजन्तोदाहरणम् वैदी। विदस्याऽपत्यं स्त्री। अनृष्यानन्तर्ये विदादिभ्योऽञ्। पूर्ववज्जातिलक्षणे ङीषि प्राप्ते ङीन् विधीयते। अत्र सर्वा अपि जातयोऽपत्यरूपा गोत्राऽपत्यरूपा वा आतिदेशिकाः पूर्ववदेव॥

११. हस्ताज्जातौ[3]।

अस्यार्थः :—हस्तशब्दाज्जातौ वाच्यायां मत्वर्थे इनिः स्यात्। उदाहरणम् : - हस्ती। प्रत्युदाहरणम् :—हस्तवान् पुरुषः। अत्र

---

१. ( पा० अ० अ० ४, पा० १, सू० ६६ ) ॥ इति ॥
२. ( पा० अ० अ० ४, पा० १, सू० ७३ )॥ इति ॥
३. ( पा० अ० अ० ५, पा० २, सू० १३३ ) ॥ इति ॥

ह्यस्तत्वजातिराकृतिग्रहणा। सा चाकृतिः विलक्षणदन्तकर्णस्थूल-पादपुच्छशुण्डादिमती शृङ्गरहिता प्रायः कृष्णवर्णा। श्यामद्वीपे प्रदेशविशेषे श्वेतवर्णा अपि हस्तिनो लभ्यन्ते, ते च ऐरावतसजातीया इति कृष्णवर्णो प्रायिकत्वमुपात्तम्।

१२. जातिनाम्नः कन्[1]।

अस्यार्थः :—जाति शब्दो यो मनुष्यनामधेयस्तस्मात्कन् स्यादनुकम्पायां नीतौ च। सिंहकः। शरभकः। रासभकः। अत्र सिंहत्वं शरभत्वं रासभत्वञ्च आकृतिग्रहणा जातिः।

१३. जात्यन्ताच्छ बन्धुनि[2]।

अस्यार्थः :—जात्यन्ताच्छब्दाद् बन्धुनि वाच्ये छ प्रत्ययः स्यात् स्वार्थे। ब्राह्मणजातीयः। द्व्येकयोरितिवद् भावप्रधानो ब्राह्मणशब्दः। तस्य जातिशब्देन सह बहुव्रीहिः। ब्राह्मणत्व जात्याधारभूतः पिण्ड इत्यर्थः। बन्धुनि किम् ? ब्राह्मणजातिः शोभना। अत्र षष्ठीतत्पुरुषः।

भावप्रधानेन सह कर्मधारयो वा। जातेर्व्यञ्जकं द्रव्यं बन्धु बध्यते जातिरस्मिन्निति बन्धुरिति व्युत्पत्तेः। यद्यपि रूढोऽपि बन्धुशब्द आप्त-पर्यायोऽस्ति, तथापि स नेह गृह्यते सूत्रे बन्धुनि-इति नपुंसकनिर्देशात्। इयं जातिस्तु सकृदाख्यातनिर्ग्राह्या।

१४. ओषधेरजातौ[3]।

अस्यार्थः :—ओषधिशब्दाज्जातिभिन्नेऽर्थेऽण् स्यात् स्वार्थे ओषधं पिबति। जातौ तु नाण्। ओषधयः क्षेत्रे रूढाः। "ओषधयः फलपाकान्ता" इत्यमरः। ओषधित्वं व्रीहियवादिनिष्ठाजातिराकृतिग्रहणा फलपाक-कालिक्याऽऽकृत्याऽऽभिव्यङ्ग्या।

१५. वा बहूनां जातिपरिप्रश्ने डतमच्[4]।

अस्यार्थः :—बहूनां मध्ये एकस्य निर्धारणे डतमच् वा स्यात् जातिपरिप्रश्ने गम्ये। कतमो भवतां कठः, अध्यापकः शूरो देवदत्तो

---

१. ( पा० अ० अ० ५, पा० ३, सू० ८१ ) ।। इति ।।
२. ( पा० अ० अ० ५, पा० ४, सू० ९ ) ।। इति ।।
३. ( पा० अ० अ० ५, पा० ४, सू० ३७ ) ।। इति ।।
४. ( पा० अ० अ० ५, पा० ३, सू० ९३ ) ।। इति ।।

वा ? यतमः । ततमः । अत्र कठत्वं शाखाध्येतृगता जातिः । जातिपरि-प्रश्ने इति प्रत्याख्यातमाकरे । तेनान्यत्रापि । कतमो भवतां देवदत्त इत्यादि ।

१६. अनोऽश्मायः सरसां जातिसंज्ञयोः[१] ।

अस्यार्थः :—अनोऽश्माऽयः सरशब्दान्तेभ्यः शब्देभ्यष्टच् स्याज्जातौ संज्ञायाञ्च गम्यायाम् । जात्युदाहरणानि—उपानसम् । अमृताश्मः । कालायसम् । मण्डूकसरसम्, इति । योगरूढिशब्दा एते जातिवचनाः । तत्र शकटाद्यन्यतमानसमीपवर्तिवस्तुगतोपनसत्वं काचन जातिः । अमृताश्मत्वं पाषाणगता जातिः । कालायसत्वं तु लोहगतो जातिविशेषः । मण्डूकसरसत्वं सरोगतो जातिविशेषः । एताः सर्वा अपि जातय आकृति ग्रहणाः ।

१७. जातिकालसुखादिभ्योऽनाच्छादनात्क्तोऽकृतमितप्रतिपन्नाः[२] ।

अस्यार्थः :—जात्यादिभ्यः परं तान्तमन्तोदात्तं स्याद् बहुव्रीहौ कृतादीन् वर्जयित्वा, आच्छादनवाचकात्परं चेन्न । सारङ्गजग्धी । सारङ्गो जग्धोभक्षितो यया सेति बहुव्रीहिः । अत्र सारङ्गत्वमाकृतिग्रहणा जातिः ।

१८. जातेश्च[३] ।

अस्यार्थः :—जातेः परो यः स्त्री प्रत्ययस्तदन्तं न पुंवत् । शूद्राभार्यः, ब्राह्मणीभार्यः, हस्तिनीभार्यः, शुनीभार्यः, इत्यदीन्युदाहरणानि ।

अत्र शूद्रा ब्राह्मणी इति द्वे जाती सकृदाख्यातनिर्गाह्ये । हस्तिनी शुनी, इति द्वे तु आकृतिग्राह्ये—इति विशेषः ।

१९. तृणे च जातौ[४] ।

अस्यार्थः :—तृणे चोत्तरपदे कोः कदादेशः स्यात् समुदायेन जातौ वाच्यायाम् । कत्तृणम्, कत्तृणत्वं जातिविशेष आकृतिग्राह्यः ।

---

१. ( पा० अ० अ० ५, पा० ४, सू० ९४ ) ।। इति ।।
२. ( पा० अ० अ० ६, पा० २, सू० १७० ) ।। इति ।।
३. ( पा० अ० अ० ६, पा० ३, सू० ४१ ) ।। इति ।।
४. ( पा० अ० अ० ६, पा० ३, सू० १०३ ) ।। इति ।।

२०. मनोर्जातावञ्यतौ षुक् च[1] ।

अस्यार्थः :—मनुशब्दादपत्येऽर्थे अञ्यतौ प्रत्ययौ स्तः प्रकृतेः षुगागमश्च समुदायेन जातावभिधेयायाम् । मानुषः । मनुष्यः, जातिशब्दावेतौ । मानुषत्वं मनुष्यत्वं वाऽऽकृतिग्रहणा जातिः । यद्यपि मनुप्रकृतिकाणन्तप्रकृतिकत्वप्रत्ययान्तशब्दाभिधेयं माणवत्वं तु न जातिराकृतिग्राह्यत्वाऽभावात् । तदुक्तम्—अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः ।

नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः । इति णत्वविधानार्थमिदम् । अण उत्सर्गेणैव सिद्धत्वात् । अनधीत वेदत्वान्मूढत्वं विहिताननुष्ठानाच्च कुत्सितत्वम् । नहि मूढत्वं कुत्सितत्वे आकृतिग्राह्ये । एवमेव सकृदाख्यातनिर्ग्राह्यत्वाऽऽभावोऽप्यत्र् बोध्यः । तथाऽऽपि दीक्षितमतेनापत्यप्रत्ययान्ततया आतिदेशिकी जातिरस्त्येव ।

२१. ब्राह्मोऽजातौ[2] ।

अस्यार्थः :—योगविभागोऽत्र कर्तव्यः । ब्रह्म इति निपात्यतेऽनपत्येऽणि । इह विभक्ते सूत्रे प्रथमेऽपत्ये इति न सम्बध्यते । अन्यथा निपातनमिदं व्यर्थं स्यात् । न मपूर्व इति प्रकृतिभावनिषेधाद्धि लोपसिद्धेरतएवाऽत्रानपत्येऽणीत्युक्तम् । ब्राह्मो मुहूर्तः । ब्राह्मः स्थालीपाकः । ब्राह्मं हविः । इत्याद्युदाहरणम् । ततोऽजातौ । अपत्ये जातावणि ब्रह्मणस्टिलोपो न स्यात् । ब्रह्मणोऽपत्यं ब्राह्मणः । अपत्ये किम् ? ब्राह्मी औषधिः । अत्र ब्राह्मणत्वंजातिरसर्वलिङ्गत्वे सति सकृदाख्यातनिर्ग्राह्या । ब्राह्मीत्वं तु जातिराकृतिग्राह्या । द्वितीये तु सूत्रे जाताविति अजाताविति वा छेदः । तत्राद्ये मण्डूकप्लुत्या अपत्य इति वर्तते नेति च । तदयमर्थः—अपत्ये जातौ ब्राह्मणशब्दे टिलोपो न भवतीति । केचिदिह अजाताविति च्छित्वा जातौ न भवति इति व्याचक्षते । फलं त्वेकमेव । अस्मिन् पक्षे न इति नानुवर्तनीयम् । जातौ किम् ? ब्रह्मणोऽपत्यं ब्राह्मो नारदः । यदि तु द्वितीयं सूत्रं न स्यात्तदा ब्राह्मणो

---

१. ( पा० अ० अ० ४, पा० १, सू० १६१ ) ॥ इति ॥
२. ( पा० अ० अ० ४, पा० ४, सू० १७१ ) ॥ इति ॥

 

न सिध्येत् । न मपूर्वं इति प्रकृतिभावनिषेधात् नस्तद्धिते इति टिलोपप्रवृत्तेरतो योगविभागेन विभक्तं द्वितीयसूत्रमावश्यकम् ।

२२. पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तं - जातिः[1] ।

सूत्रोदाहरणम् :—इभपोटा । पोटा स्त्री पुंसलक्षणा स्तनश्वयाश्ववादियुक्ता स्त्री ।

इभयुवतिः । अत्रेभत्वमाकृतिग्राह्याजातिः । अग्निस्तोकः । अग्नित्वमपि आकृतिग्राह्या जातिः । एवमुदश्वित्कतिपयम् । अत्रोदश्वित्वमपि गो गृष्टिः । गृष्टिः सकृत्प्रसूता गौः । गोधेनुः । धेनुर्नवप्रसूतिका । गोवशा । वशा वन्ध्या । गो वेहत् । वेहद् गर्भघातिनि । गोवष्कयणी । वष्कयणी तरुणवत्सा । अत्र गोत्वजातिरपि सास्नादिरूपाऽकृतिग्राह्या । कठप्रवक्ता । कठश्रोत्रियः । कठाध्यापकः । कठधूर्तः । अत्र कठत्वं गोत्ररूपा जातिश्चरणसंबद्धा ।

॥ इति पाणिनीयसूत्रेषु जातिनिर्देशः ॥

---

१. ( पा० अ० अ० २ पा० १ सू० ६५ ) ॥ इति ॥

## ६—अथ व्याकरणवार्त्तिकेषु जातिनिर्देशः

१. निष्ठासूत्रे[1] वार्तिकम्:—

**जातिकालसुखादिभ्यो निष्ठा परा वाच्या इति ।**

सारङ्गजग्धी । प्रायिकं चेदं कृतकटः । पीतोदकः । अत्र सारङ्गत्व-कटत्वोकत्वानि जातय आकृतिग्राह्याः ॥

२. अजाद्यतष्टाप्[2] सूत्रे वार्तिकम्:—

**शूद्राचाऽमहत्पूर्वाजातिः ।**

अस्यार्थः—इदं वार्तिकं त्रेधा विभज्यते । शूद्रा चेति । असहत्पूर्वेति । जातिरिति । तत्र जातिरित्यस्योभयत्रापि संबन्धः । तत्राद्यस्यार्थः शूद्रशब्दष्टापं लभते । जातिश्चेद्वाच्या । जातिलक्षणङीषोऽपवादः । शूद्रजातीया शूद्रा इति । पुंयोगे तु शूद्री इति । महत्पूर्वस्तु टापं न लभते समुदायेन जातिश्चेद्वाच्या । तदुक्तं कोशकृद्भिः—आभीरी तु महाशूद्री जातिपुंयोगयोः समा इति । या तु महती शूद्रा तत्र महाशूद्रा इतीष्यत एव । महत्पूर्वस्य जातिवाचकत्वाऽभावात् । अत्र शूद्रत्वं महाशूद्रत्वं वा जातिः, असर्वलिङ्गत्वे सति सकृदाख्यातनिर्ग्राह्ये ति जातिलक्षणलक्षिता ।

३. बहुव्रीहेश्चान्तोदात्तात्सूत्रे वार्तिकद्वयम्[3] ।

(क) अन्तोदात्ताज्जातिप्रतिषेधः ।

अस्यार्थः—बहुव्रीहेः क्तान्तादन्तोदात्तादन्ताज्जातान्तात् स्त्रियां ङीषः प्रतिषेधो वक्तव्य इति । दन्तजाता, स्तनजाता । अत्र दन्तत्वं-स्तनत्वञ्चाकृतिग्रहणा जातिः ।

(ख) जातिपूर्वाद् वा ।

अस्यार्थः—अथवा बहुव्रीहेः क्तान्तादन्तोदात्तादन्ताज्जातिपूर्वात्-स्त्रियां ङीष् स्यादिति वक्तव्यम् । ऊरुभिन्नी । भिन्नौ असंश्लिष्टौ ऊरु

---

१. ( पा० अ० अ० २, पा० २, सू० ३ ) ॥ इति ॥
२. ( पा० अ० अ० ४, पा० १, सू० ४ ) ॥ इति ॥
३. ( पा० अ० अ० ४, पा० १, सू० ५२ ) ॥ इति ॥

यस्या इति विग्रहे बहुव्रीहौ भिन्नशब्दस्य निष्ठा इति पूर्वनिपाते प्राप्ते जातिकालसुखादिभ्यः परा निष्ठावाच्या इति परनिपातः। अत्र ऊरुत्वमाकृतिग्रहणा जातिः॥

४. ऊङुतःसूत्रे वार्तिकम्[1] :—

**अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम्।**

अस्यार्थः—प्राणिजाति भिन्नजातिवाचिभ्यः उवर्णान्तेभ्यः स्त्रियामूङ् स्यात्। रज्ज्वादिपर्युदासादुवर्णान्तेभ्य एव। पर्युदासेन तद्भिन्न तत्सदृशस्यैव ग्रहणात्। नहि अब्राह्मणमानयेत्युक्ते लोष्टादिरानीयते।

सूत्रादुत इत्यस्य संबन्धे तु अलाबूकर्कन्धूशब्दाभ्यामूङ् न स्यात्। उदाहरणान्तुअलाब्वा, कर्कन्ध्वा इति। अनयो दीर्घान्तत्वेऽपि नोङ्धात्वोरिति विभक्त्युदात्तत्वप्रतिषेध ऊङः फलम्। अतएव प्रथमान्तद्वितीयान्ते अतिक्रम्य तृतीयान्तमुदाहृतम्। अलाबू "लौकी" इति भाषायाम्। कर्कन्धूबंदरीफलम्। अलाबूत्वंकर्कन्धूत्वञ्चाकृतिग्रहणा जातिः।

५. राजश्वशुराद्यत् सूत्रे वार्तिकम्[2] :—

**राज्ञोऽपत्ये जातिग्रहणम्।**

अस्यार्थः—राजन् शब्दादपत्येऽर्थे यत्प्रत्ययः स्यात्प्रकृतिप्रत्ययसमुदायेन जातिग्रहणं जातिज्ञानं चेदिति।

एवञ्च राजन्यशब्दः क्षत्रिये पङ्कजादिवद् योगरूढ इति बोध्यम्। राजन्यत्वं क्षत्रियत्वरूपाजातिः असर्वलिङ्गत्वे सति सकृदाख्यातनिर्ग्राह्या इति।

---

१. (पा० अ० अ० ४, पा० १, सू० ६६)॥ इति॥

२. (पा० अ० अ० ४, पा० १, सू० १३७)॥ इति॥

६. चतुष्पादो गर्भिण्या इति सूत्रे वार्तिकम्[1] :—

**चतुष्पाज्जातिरिति वक्तव्यम् ।**

अत्र पोटायुवति इत्यादि सूत्रान्मण्डूकप्लुत्या जातिरित्यनुवर्तते । चतुष्पाज्जातिवाचिनो गर्भिणीशब्देन सह वा समस्यन्ते, स च समासः कर्मधारयस्तत्पुरुषश्चेत्यर्थः । तत्पुरुषः समानाधिकरणः कर्मधारय इति लक्षणात् । तत्पुरुषाधिकाराच्च । अत्र जातिपदानुवृत्यभावे कालाक्षी गर्भिणी इत्यत्रापि अनेन समासः स्यात् । चतुष्पात्पदाभावे तु ब्राह्मणी गर्भिणी इत्यत्रापि अनेन समासः स्यात् । प्रत्युदाहरणन्तु—व्यस्तमेव दर्शितम् । प्रत्युदाहरणे विशेषणं विशेष्येण बहुलमिति समासस्तु स्यादेव । तत्र समासे गर्भिणी कालाक्षीत्यादिकः पूर्वनिपाते विशेषः । अत्र समासे विशेषणे पुंवद् भावस्तु न । गर्भिणी शब्दस्य भाषितपुंस्क-प्रकृतिकत्वाऽभावात् । उदाहरणे गोत्वरूपा चतुष्पाद्गता जातिः । सास्नालाङ्गूल-ककुद-खुरविषाणादिरूपाऽऽकृतिग्राह्येति ॥

**॥ इति व्याकरणवार्तिकेषु जातिनिर्देशः ॥**

---

१. ( पा० अ० अ० २, पा० १, सू० ७१ ) ॥ इति ॥

## ७—अथ व्याकरणमहाभाष्ये तद्व्याख्याने प्रदीपे च जातिनिर्देशः

महाभाष्यम्:—यत्तर्हि तद्भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं, स शब्दः ?

नेत्याह । आकृतिर्नाम[1] सा ।

भाष्यटीकाप्रदीपः :—भिन्नेष्वभिन्नमिति । अनेन सामान्यस्यैकत्वं कथ्यते । छिन्नेष्वच्छिन्नमिति । अनेन तु नित्यत्वम् सामान्यभूतमिति सत्ताख्यं महासामान्यं गोत्वादेः सामान्यविशेषस्योपमानं निर्दिष्टम् । सामान्यमिव सामान्यभूतम् । भूतशब्द उपमार्थे, यथा पितृभूत[2] इति ॥

प्रदीप-टीका उद्योतः :—तुना उक्तवैलक्षण्यं बोध्यते । सत्ताजातेः द्रव्यगुणकर्मवृत्तित्वात् सकलजात्यपेक्षया अधिकदेशवृत्तितेत्याशयेनाह महेति ।

सामान्यभूतम्—महासामान्यसदृशम् । प्रकृते सामान्यशब्दस्य महासामान्यपरत्वात् । उपमार्थ-सादृश्ये । पितृसदृशः[3] ।

**अनेन भाष्येण तद्व्याख्यानेन प्रदीपेन, तद् व्याख्यानेन उद्योतेन च आकृतिग्रहणाजातिरित्यादिपद्योक्तचतुर्विधजाति-साधारणं जातिलक्षणं पूर्वपद्यासंगृहीतसत्ताख्यमहासामान्य-संग्राहकश्च निर्दशितम् ।**

१. विशेषणानां चाऽजातेः[1] ।

महाभाष्यम्:—कथमिदं विज्ञायते जातिर्यद् विशेषणमिति, आहोस्विज्जातेर्यानि विशेषणानीति ?

---

१. ( म० भा० अ० १, पा० १, आ० १ ) ॥ इति ॥
२. ( म० भा० प्र० टी० अ० १, पा० १, आ० १ ) ॥ इति ॥
३. ( म० भा० प्र० टी० उ० टी० अ० १, पा० १, आ० १ ) ॥ इति ॥
१ ( पा० अ० अ० १, पा० २, सू० ५२ ) ॥ इति ॥

किं चातः ? यदि विज्ञायते-जातिर्यद् विशेषणमिति, सिद्धम् पञ्चाला जनपद इति।

"सुभिक्षः सम्पन्नः पानीयो बहुमाल्यफल" इति न सिध्यति। अथ विज्ञायते "जातेर्यानि विशेषणानीति" सिद्धम् "सुभिक्षः सम्पन्नः पानीयो बहुमाल्यफल" इति "पञ्चाला जनपद" इति न सिद्ध्यति।

एवं तर्हि नैवं विज्ञायते—"जातिर्यद् विशेषणमिति" 'नापि-जातेर्यानि विशेषणानीति'। कथं तर्हि ? विशेषणानां युक्तवद्भावो भवति।

'आ जातेः' आजातिप्रयोगात्। इति

**अत्रभाष्ये जनपदत्वरूपा जातिराकृतिग्राह्या निर्दिष्टा।**

(अथ) किमर्थं पुनरिदमुच्यते ?

विशेषणानां वचनं जातिनिवृत्त्यर्थम्।

जातिनिवृत्यर्थोऽयमारम्भः। किमुच्यते—जातिनिवृत्यर्थं इति, न पुनर्विशेषणानामपि युक्तवद्भावो यथा स्यादिति।

समानाधिकरणत्वात्सिद्धम्।

समानाधिकरणत्वाद्विशेषणानां युक्तवद्भावो भविष्यति। यद्येवं नार्थोऽनेन। लुपोऽन्यत्रापि जातेर्युक्तवद्भावो न भवति। क्वान्यत्र ? बदरीसूक्ष्मकण्टका, मधुरा वृक्ष इति।

किं पुनः—कारणमन्यत्रापि जातेर्युक्तवद्भावो न भवति ?

आविष्टलिङ्गा जातिर्यल्लिङ्गमुपादाय प्रवर्त्तते, उत्पत्तिप्रभृत्याविनाशान्नतल्लिङ्गं जहाति॥

महाभाष्यम्:—न तर्हीदानीमयं योगो वक्तव्यः ? वक्तव्यश्च किं प्रयोजनम् ? इदं तत्र तत्रोच्यते 'गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्तीति,' तदनेन क्रियते। इति।

**अत्र भाष्ये बदरीत्ववृक्षत्वरूपे जाती आकृतिग्राह्ये निर्दिष्टे। अत्र यद्यपि—आविष्टलिङ्गा इत्यारभ्य आविनाशादित्यन्तेन ग्रन्थेन जातेरुत्पत्तिविनाशौ प्रतीयेत तथापि**

**जातिवाचिशब्दगतयोस्तयोर्जातावुपचारात्तथा प्रयोगः कृत इति न तावल्लिङ्गं जहाति इति वक्ष्यमाणग्रन्थतः प्रतीयते। निदर्शितश्चाऽत्रौद्धृते प्रदीपे।**

हरीतक्यादिषु व्यक्तिः

हरीतक्यादिषु व्यक्तिर्भवति युक्तवद्भावेन। हरीतक्याः फलानि हरीतक्यः फलानि इति।

**अत्र भाष्ये व्यक्तिर्लिङ्गम्। हरीतकीत्वं जातिराकृतिग्राह्या।**

खलतिकादिषु वचनम् :—

खलतिकादिषु वचनं भवति युक्तवद्भावेन। खलतिकस्य पर्वतस्याऽदूरभवानि वनानि खलतिकं वनानि। इति।

**अत्र भाष्ये खलतिकत्वं न जातिरेकमात्रवृत्तित्वात् वनत्वं तु जातिराकृतिग्राह्या इति।**

मनुष्यलुपि प्रतिषेधः :—

मनुष्यलुपि प्रतिषेधो वक्तव्यः। चञ्चा अभिरूपः। वध्रिका दर्शनीयः। इति।

**अत्र भाष्ये कन्प्रकृतिवाच्यं चञ्चात्वं वध्रिकात्वञ्च जाती आकृतिग्राह्ये। चञ्चा तृणमयः पुमान् इत्यमरः। वध्रिका वस्त्रमुञ्जशणवल्कलचर्मादिनिर्मिता। वरटा इति लोके प्रसिद्धा।**

प्रदीप-टीका :—विशेष। कथमिति। किं समानाधिकरण्येन सम्बन्धः। विशेषणानां युक्तवद्व्यक्तिवचने, जातिस्तु यदा विशेषणं तदा नेति।

अथ वैयधिकरण्येन—'जातेर्यानि विशेषणानि' तेषां नेति? अजातेरिति चाऽसमर्थं समासः, भवतिना नञः सम्बन्धात्। उभयथा चाऽव्याप्तिः प्रतिषेधस्येति प्रश्नः। आजातिप्रयोगादिति। सूत्रे आङ्प्रश्लेषो न तु नञः।

अत्रायमर्थः—तावद्युक्तवद्भावो भवति यावज्जातिर्नैव प्रक्रान्ता। यदा तु जातिः प्रक्रम्यते विशेषणत्वेन विशेष्यत्वेन वा, तदा युक्तवद्भावो न भवतीति। 'बदरी सूक्ष्मकण्टकेति। मधुरादीनां विशेषणानां बदर्युपनिपाते तल्लिङ्गसंख्यायोगः।

प्रदीप-टीका :—

वृक्षोपनिपाते तु वृक्षाश्रय लिङ्गसंख्यायोगः। आविष्टलिङ्गेति। आविष्टं लिङ्गं यया साऽऽविष्टलिङ्गा। नियतलिङ्गेत्यर्थः। सर्वत्र सर्वेषां लिङ्गानां सद्भावेऽपि केनचिच्छब्देन किञ्चिल्लिङ्गं प्रत्याय्यत इति शब्दविशेषापेक्षयाऽऽविष्टलिङ्गत्वमुच्यते। उत्पत्तिप्रभृत्याविनाशादिति। जातेरुत्पत्तिविनाशाऽयोगात्। शब्दव्यवहारगतावुत्पत्तिविनाशौ गृह्येते। तेनाऽऽसंसारं यावच्छाब्दो व्यवहारस्तावज्जातेर्नियतलिङ्गत्वमित्यर्थः। गुणवचनानामिति। पदसंस्कारपक्षे वाचनिकमेतत्। पदे हि पदान्तरनिरपेक्षे संस्क्रियमाणे नपुंसकम्, लिङ्गसर्वनामप्राप्तमेकत्वं च वस्त्वन्तरनिरपेक्षत्वात्सन्निहितमिति 'शुक्लं पटा' इति प्राप्ते भाविनो बहिरङ्गस्याश्रयस्य सम्बन्धिन्यौ लिङ्गसंख्ये अनेन प्रतिपाद्येते।

विशेषणानाम्—गुणवचनानामित्यर्थः युक्तवद्व्यक्तिवचने। आश्रयवल्लिङ्गसंख्ये इत्यर्थः। यदा तु वाक्यसंस्कारस्तदाऽयमनुवाद एव। आश्रयविशेषस्य पूर्वमेव प्रक्रमे विशेषणानामपि तन्निष्ठत्वात् तद्गतयोर्लिंगसंख्ययोः सिद्धत्वात्। यदा तु जातिविशेषणं तदा न भवति युक्तवद्भावः।

हरीतक्यादिष्विति। नियमार्थमेतत्। तेन वचनमभिधेयाश्रयं भवति।

खलतिकमिति—खलतिको नाम पर्वतः तस्यादूरभवानि वनानीति लिङ्गमभिधेयाश्रयमेव भवति।

मनुष्यलुपीति—विशेषणानामयं प्रतिषेधः। तेन चञ्चा अभिरूपः इत्यभिधेयाश्रये लिङ्गसख्ये भवतः। तृणमयः पुरुषः चञ्चा। तत्सदृशो संज्ञायामिति विहितस्य कनो 'लुम्मनुष्य' इति लुप्।

२—जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्[1] :—

महाभाष्यम्:—इदमयुक्तं वर्तते। (किमत्रायुक्तम्? बहवस्तेऽर्थास्तत्र युक्तं बहुवचनम्। तद्यदेकवचने शासितव्ये बहुवचनं शिष्यत एतदयुक्तम्। बहुष्वेकवचनमिति नाम वक्तव्यम्। अत उत्तरं पठति।

जात्याख्यायां सामान्याभिधानादैकार्थ्यम् :—

जात्याख्यायां सामान्याभिधानादैकार्थ्यम् भविष्यति। यत्तद् व्रीहौ व्रीहित्वं यवे यवत्वम् गार्ग्ये गार्ग्यत्वं तदेकम्। तच्च विवक्षितम्, तस्यैकत्वादेकवचनमेव प्राप्नोति। इष्यते च बहुवचनं स्यादिति। तच्चान्तरेण वचनं न सिद्ध्यतीति जात्याख्यायामेकस्मिन् बहुवचनम्। एवमर्थमिदमुच्यते। अस्ति प्रयोजनमेतत्। किं तर्हीति?

तत्रैकवचनादेश उक्तम् :—

किमुक्तम्? व्रीहिभ्यः आगत इत्यत्र "घेर्ङिति[2]" इति गुणः प्राप्नोतीति।

नैष दोषः।

अर्थातिदेशात्सिद्धम्:—

अर्थातिदेशो यम्। नेदं पारिभाषिकस्य वचनस्य ग्रहणम्। किं तर्हि? अन्वर्थग्रहणम् उच्यते वचनम्, बहूनामर्थानां वचनं बहुवचनमिति यावद्ब्रूयादेकोऽर्थो बहुवद्भवतीति, तावदेकस्मिन् बहुवचनमिति।

संख्याप्रयोगे प्रतिषेध :—

संख्याप्रयोगे प्रतिषेधो वक्तव्यः। एको व्रीहिः सम्पन्नः सुभिक्षं करोति। एको यवः सम्पन्नः सुभिक्षं करोति।

अस्मदो नाम युवप्रत्यययोश्च :—

अस्मदो नाम प्रयोगे युवप्रत्ययप्रयोगे च प्रतिषेधो वक्तव्यः। नामप्रयोगे, अहं देवदत्तो ब्रवीमि। अहं यज्ञदत्तो ब्रवीमि। युवप्रत्ययप्रयोगे—अहं गार्ग्यायणो ब्रवीमि। अहं वात्स्यायनो ब्रवीमि।

---

१. (पा० अ० अ० १: पा० २. सू० ५८)॥ इति॥

२. (पा० अ० अ० ७, पा० ३, सू० १११)॥ इति॥

युवग्रहणेनार्थः :—"अस्मदो नाम प्रत्ययप्रयोगे नेत्येव। इदमपि सिद्धं भवति। अहं तु पटुर्ब्रवीमि। अहं पण्डितो ब्रवीमि।

अशिष्यं वा बहुवत्पृथक्त्वाभिधानात् :—

अशिष्यो वा बहुवद्भावः। किं कारणम्? पृथक्त्वाभिधानात्। पृथक्त्वेन हि द्रव्याण्यभिधीयन्ते। बहवस्तेऽर्थास्तत्र युक्तं बहुवचनम्। किमुच्यते पृथक्त्वाभिधानादिति। यावता इदानीमेवोक्तम्। जात्याख्यायां सामान्याभिधानादैकार्थ्यमिति।

जातिशब्देन हि द्रव्याभिधानम् :—

जातिशब्देन हि द्रव्यमप्यभिधीयते, जातिरपि। कथं पुनर्ज्ञायते जातिशब्देन द्रव्यमप्यभिधीयत इति। एवं हि कश्चिन्महति गोमण्डले गोपालकमासीनं पृच्छति "अस्त्यत्र" कञ्चिद्गां पश्यसीति स पश्यति—चायं गाः, पृच्छति च—कञ्चिदत्र गां पश्यसीति। नूनमस्य द्रव्यं विवक्षितमिति। तद्यदा द्रव्याभिधानं तदा बहुवचनं भविष्यति, यदा सामान्याभिधानं तदेकवचनं भविष्यति।

प्रदीप-टीका :—जात्या - जातिरूपलक्षणम्, द्रव्यं तु शब्दार्थं, इति दर्शनाश्रयेणाह—इदमयुक्तमिति। बहुष्वेकवचनमिति। अत्र पक्षे जातेरुपलक्षणत्वेनाऽस्या जात्याख्येति व्याख्यानम्। जातिपदार्थ-पक्षाश्रयेणोत्तरमाह—जात्याख्यायामिति। गार्ग्ये गार्ग्यत्वमिति। गोत्रस्यापि जातत्वाभ्युपगमदेतदुक्तम् बहुषु गर्गेषु गार्ग्यत्वस्याऽभिन्न-स्याऽऽभावात्।

एकस्मिस्तु पिण्डे अवस्थाभेदानुगता डित्थत्वादिका जातिर्जात्याख्या-यामितिवचनसामर्थ्यान्न गृह्यते। जातिपदार्थवादिमते हि सर्वे शब्दा जात्यर्थाभिधायिन इति सामर्थ्यादिभिन्नपिण्डविषयाजातिराश्रीयते। बहूनामिति। बहूनामर्थानां बहुत्वमेवोच्यते इत्येकस्मिन्नर्थे बहुत्वाद्-बहुवचनं भवतीति नास्ति स्थान्यादेशाभावः।

एवं तिष्यपुनर्वस्योरित्यत्रापि द्विवचचनबहुवचनशब्दाभ्यां द्वित्व-बहुत्वयोरभिधानादर्थातिदेशात्स्थान्यादेशभावाऽऽभावः। संख्याप्रयोग इति।

एकस्यैव बहुत्वातिदेशः क्रियमाण एकशब्दस्य प्रयोगेऽपि प्राप्नोतीति प्रतिषेधः उच्यते। उभयपदार्थं पक्षाश्रयेण प्रत्याख्यातुमाह अशिष्यमिति। तत्र कदाचिज्जातेः प्राधान्यं कदाचिद् द्रव्यस्येति यथेष्टं प्रयोग उपद्यते। इति।

**अत्रत्यभाष्यतत्प्रदीपदर्शनेन जातेरेकत्वं गोत्रस्य च जातित्वं डित्थादियदृच्छाशब्दानामपि डित्थत्वादि जात्यर्थाभिधायित्वं जातिपदार्थवादिमते सर्वंशब्दानां जातिपदार्थाभिधायित्वञ्च प्रतीयते।**

ब्रह्मणि वदः :—

ब्रह्मणि वद उपसंख्यानं कर्तव्यम्। ब्रह्म वादिनो वदन्ति। सुप्यजा।

प्रदीप-टीका :—सुप्य। थिन्विधाविति अताच्छील्यार्थाभिदम्। एव ब्रह्मणि वद इति।

**अत्र प्रदीपेऽयमाशयः। यदि ब्रह्मत्वं वेदत्वरूपाजातिः श्रवणसहकारेणाकृतिग्राह्या तदा ब्रह्मणि वद इति वार्तिकं जातिरूपोपदार्थम्। यदा त्वक्षरं ब्रह्म परममुच्यते तदा तु अताच्छील्यार्थमिदं वर्तिकमिति। ब्रह्मणो निर्धर्मकस्य जाति-शून्यत्वात्।**

३. जातेरस्त्रीविषयादयोपधात्[1]।

महाभाष्यम्:—जातेरित्युच्यते, का जातिर्नाम ?

१—आकृतिग्रहणा जातिर्लिङ्गानाञ्च न सर्वभाक्।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह।

---

१. (पा० अ० अ० ४, पा० १, सू० ६३) ॥ इति ॥

( इदं लक्षणं प्राग्व्याख्यातम् )

अपर आह :—

प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः ।
असर्वलिंगां बह्वर्थां तां जातिं कवयो विदुः ॥

**अस्यार्थः—सत्त्वस्य द्रव्यस्य प्रादुर्भावविनाशाभ्याम् आविर्भावतिरोभावाभ्यां सह गुणैश्च सह या सत्त्वे द्रव्ये युगपद् एकस्मिन्नेव काले संबध्यते, ताम् असर्वलिङ्गाम् बह्वर्थाम् बहुव्यक्तिवृत्तिम् कवयः क्रान्तदर्शिनो विद्वांसो जातिं विदुरिति ।**

गोत्रं च चरणानि च । गोत्रं च चरणानि च जातिं विदुरिति संबध्यते । कः पुनरेतयोर्जातिलक्षणयोर्विशेषः ?

यथा पूर्वं जातिलक्षणं तथा "कुमारी भार्य" इति भवितव्यम् । कुमारत्वस्याकृतिग्राह्यत्वेन जातित्वेन जातेश्चेति पुंवद्भावप्रतिषेधात् ।

यथोत्तरं तथा "कुमार भार्यः" इति भवितव्यम् । अथास्त्रीविषयादिति कथमिदं विज्ञायते ? सनानायामाकृतौ यदस्त्रीविषयमिति ?

आहोस्वित् क्वचिदस्त्रीविषयमिति ? किं चातः ?

यदि विज्ञायते समानायामाकृतौ यदस्त्रीविषयमिति द्रोणी, कुटी, पात्रीति न सिध्यति ।

**अत्र द्रोणीशब्दः सस्यसेचनसाधने स्वल्पे नौकाकारे पात्रे वर्तते । कुटी तृणपर्णादि निर्मितं स्वल्पं गृहम् । पात्री महद् भोजनपात्रम्, सरसीवत् ।**

अथ विज्ञायते क्वचिदस्त्रीविषयमिति माला, बलाका, अत्रापि प्राप्नोति ।

अस्तु क्वचिद्यदस्त्रीविषयमिति । कथं माला बलाकेति ।

**अत्र बलाका ( बिसकण्ठिका ) ।**

अजादिषु पाठः करिष्यते ।

अयोपधादिति किमर्थम् ? इभ्या, क्षत्रिया। अत्यल्पमिदमुच्यते—अयोपधादिति, अकोपधादित्यपि वक्तव्यम्। इहापि यथा स्यात्—चटका मूषिकेति। यद्यकोपधादित्युच्यते—काकी-कोकी, पिकी, शुकी, उलूकीति न सिध्यति।

**अत्र चटका पक्षिविशेषः। "गौरैया" इति भाषायाम्। कोकी-चक्रवाकी।**

अस्तु तर्ह्ययोपधादित्येव। कथं चटका मूषिकेति ?

अजादिषु पाठः कर्तव्यः।

योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः—

योपधप्रतिषेधे गवयहयमुकयमनुष्यमत्स्यानामप्रतिषेधो भवतीति वक्तव्यम्। गवय-गवयी। हय-हयी। मुकय-मुकयी। मनुष्य-मनुषी। मत्स्य-मत्सी।

**अत्र गवयो गोसदृश आरण्यकः पशुविशेष। मुकयोपि आरण्यक एव। एतद् भाष्योदाहृदा बलाकात्वादिकाः सर्वा अपि प्राणिजातय आकृतिग्राह्याः।**

प्रदीप-टीका :—का जातिरिति। लक्षणविप्रतिपत्त्या प्रश्नः। आकृतिग्रहणेति। गृह्यतेऽनेनेति ग्रहणमिति कारणसामान्ये पदं संस्क्रियते। तत्राकृतिशब्दसंनिधाने स्त्रीत्वप्रतिपत्तेः "बहिरङ्गत्वात् स्त्रीप्रत्ययनिमित्तं न भवति। आकृतिग्रहणं यस्याः सा आकृतिग्रहणा, अवयवसंनिवेशविशेषव्यङ्ग्येत्यर्थः।

एतेन गोत्वादि जातिर्लक्षिता। ब्राह्मणादिस्तु न संगृहीता, ब्राह्मणक्षत्रियादीनां संस्थानस्य सदृशत्वादिति तत्संग्रहायाह—लिङ्गानामिति। लिङ्गानि सर्वाणि भजतीति सर्वशब्दस्य लिङ्गापेक्षत्वेऽपि गमकत्वात् "भजोण्विः" इति ण्विप्रत्ययः। लिङ्गानामिति कर्मणि षष्ठी। अप्राप्तप्रापणार्थं चेदं वचनमिति। तटादेः सर्वलिङ्गत्वेऽप्याकृतिग्रहणत्वाज्जातिरूपोपपत्तिः। उपदेशापेक्षं च "लिङ्गानाम्" इति जातिलक्षणमिति

ब्राह्मणत्वादिरेव लक्ष्यते। तेन देवदत्तेत्यसर्वलिङ्गत्वेऽपि जातिलक्षणं ङीषोऽभावः।

सकृदिति। "अयं गौः" इति सकृदुपदिष्टा जातिर्निर्ग्रहीतुम् निश्चेतुं पिण्डान्तरे शक्येत्यर्थः।

गोत्रमिति। अपत्यमित्यर्थः। चरणशब्देन शाखाध्यायिनो गृह्यन्ते। गोत्रस्य सर्वलिङ्गत्वात् पृथगुपादानम्, नाडायनम्, नपुंसकम् इति दर्शनात्।

प्रादुर्भावेति। सत्त्वस्य द्रव्यस्य प्रादुर्भावविनाशाभ्यां या आविर्भाव-तिरोभावौ प्राप्नोति। यावद् द्रव्यभाविनीत्यर्थः। गुणैर्युगपद् द्रव्येण संबध्यते, यथा निर्गुणस्य द्रव्यस्योपलम्भो न भवति। एवं जाति-रहितस्यापीत्यर्थः।

बह्वर्थामिति। सर्वव्यक्तिव्यापिनीमित्यर्थः। अर्थशब्दोऽत्र विषयवाची।

चरणानीति। चरणशब्दोऽध्ययनवचनः इह तूपचारादध्येतृषु वर्तते।

प्रदीप-टीका :—कुमारीभार्य इति। कौमारम् अयावद्द्रव्यभावि अपि आकृतिग्रहणत्वाज्जातिरिति "जातेश्च" इति पुंवद्भावप्रतिषेधः उत्तरे तु लक्षणे कौमारं जातिर्न भवति, अयावद्द्रव्यभावित्वात्। पूर्वोक्तमेव लक्षणं भाष्यकारस्याभिमतम्। "अपर-आह" इत्यभिधाना-दित्याहुः तथा च "युवतितरा" इति ङ्याप्सूत्रम् उदाहरणम् ददौ, "तसिलादिषु" इति प्राप्तस्य पुंवद्भावस्य "जातेश्च" इति निषेधात्।

अथेति। यदा—अस्त्रीविषयोऽस्मिन्नर्थे प्रवृत्तिनिमित्तमाश्रीयते, तदा समानायामाकृता-वस्त्रीविषयात् इत्येष पक्षो भवति। यदा तु प्रातिपदिकमन्यपदार्थत्वेनाश्रीयते, तदा यत्र क्वचिदस्त्रीविषयात्-इत्येष पक्षः संपद्यते। द्रोणीति-द्रोणशब्दः परिमाणविशेषे पुंलिङ्गः, गवादन्यां तु स्त्रीलिङ्गः।

मालेति—मलनं माल इति पुंलिङ्गम्, क्षेत्रविषये नपुंसकम्। स्रजि स्त्रीलिङ्गम्। बलमाकायतीति बलाकशब्दो यौगिकः पुंसि दृश्यते।

अस्त्विति । अन्य एव क्रियावाची, जातिशब्दस्त्वन्य एवेति परिहारान्तरमप्यत्र सम्भवति ।

गवयीति—गौरादिष्विदानींतनैर्गवादयः प्रक्षिप्ता इति वार्तिकारम्भाद्विज्ञायते ।

४. इतोमनुष्य जातेः[1] ।

महाभाष्यम्:—जातेरिति वर्तमाने पुनर्जातिग्रहणं किमर्थम् ? अयोपधादिति वर्तते, योपधादपि यथा स्यात् । औदमेयी ।

इतोमनुष्यजातेरिञ उपसंख्यानम् :—

इतो मनुष्यजातेरिञ उपसंख्यानं कर्तव्यम् । सौतङ्गमी मौनिचिती ।

प्रदीप-टीका :—औदमेयीति । उदमेयस्यापत्यम्, अतइञ, सौतङ्गमीति सुतंगमेन निर्वृत्तेति बुञ्छसादि सूत्रेण इञ् ।

अत्रौदमेयो सौतङ्गमी च गोत्ररूपा जातिः ।

५. मनोर्जाता-वज्यतौ षुक् च[2] :—

महाभाष्यम्:—अपत्ये कुत्सिते मूढे, मनोरौत्सर्गिकः स्मृतः ।
नकारस्य च मूर्धन्यस्तेन सिध्यति माणवः ॥

यदि षुक् पूर्वान्तः क्रियते—मानुषाः, बहुषु लोपः प्राप्नोति । मानुषाणां संघः "संघाङ्कलक्षणेष्वञ्यञिञामण" इत्यण् प्राप्नोति ।

अस्तु तर्हि परादिः ? यदि परादिः क्रियते—मानुषी अजन्तादितीकारो न प्राप्नोति । अस्तु तर्हि पूर्वान्त एव, कथं मनुषाः मानुषाणां संघ इति ?

उभयत्र लौकिकस्य गोत्रस्य ग्रहणं न च तल्लौकिकं गोत्रम् ।

किं तर्हि ? जातिः ।

इह तर्हि मानुषकमिति "हलस्तद्धितस्य" इति यलोपः प्राप्नोति ।

परादावप्येषदोषः ।

---

१. ( पा० अ० अ० ४, पा० १, सू० ६५ ) ॥ इति ॥
२. ( पा० अ० अ० ४, पा० १, सू० १६१ ) ॥ इति ॥

यद्धि तद्धलस्तद्धितस्येति हल् ग्रहणं न तदङ्गविशेषणं शक्यं विज्ञातुम् ।

इह हि दोषः स्यात् । "वृकाट्टेण्यण्[1]" वार्केणीति । तस्मादु-भाभ्यामेव वक्तव्यम् । प्रकृत्याऽके राजन्यमनुष्ययुवान इति ।

प्रदीप-टीका :—अपत्य इति । णत्वविधानार्थमिदम् अणः सिद्धत्वात् । न च "न दण्डमाणवान्तेवासिषु" इति निपातनाण्णत्वस्य सिद्धत्वात् वचनमनारम्भणीयम् । निपातनादर्थविशेषस्यानिश्चयात् ।

अनधीतविद्यत्वान्मूढत्वम् । विहिताकरणान्निषिद्धाचरणाच्च कुत्सितत्वम् ।

मानुषा इति । अपत्याधिकारादपत्ये प्रत्ययो विधीयते । जातिग्रहणं तु प्रकृतिप्रत्ययविशेषणं न तु जातिः प्रत्ययार्थ इति "यञञोश्च" इति लुक्प्रसङ्गः ।

परादौतु षञ् भवति नत्वञिति लुगभावः । ननु तदभक्तस्तद्ग्रहणेन गृह्यत इति परादावप्यञ् कृतप्रसङ्गः । एवं तर्हि अकारप्रश्लेषादकार-मात्रस्याञोऽत्र ग्रहणात्परादाकञ्कार्याभावः ।

ईकार इति । शाङ्गरवाद्यञो "ङीन्" इत्यनेनेतिभावः ।

न चैतदिति । अपत्येव्युत्पादितस्यापि मानुषशब्दस्य ब्राह्मणशब्दस्येव जातिवाचित्वादपत्यवाचित्वाभावादित्यर्थः ।

इह तर्हीति—हलन्तादङ्गात्परस्य तद्धितयकारस्य लोप इति मन्यते । "हलस्तद्धितस्य" इति वर्तमाने "आपत्यस्य च तद्धितेऽनाति" इति लोपोऽत्र प्राप्नोति । हलस्तद्धितस्य इत्यत्र तु-ईतीति वर्तते ।

वार्केणीति—वृकशब्दादायुधजीविसंघविशेषवचनात् स्वार्थे एण्यण्प्रत्ययः ।

**अत्रत्यभाष्यप्रदीपयोर्दर्शनेन मानुषत्वमाकृतिग्राह्या जातिः, ब्राह्मणत्वन्तु असर्वलिङ्गत्वे सति सकृदाख्यातनिर्ग्राह्या जाति-र्नंतु गोत्रस्येति लभ्यते ॥**

---

१. ( पा० अ० अ० ५, पा० ३, सू० ११५ ) ॥ इति ॥

६. ब्राह्मोऽजातौ[1]:—

महाभाष्यम् :—अथ किमिदं ब्राह्मस्याजातावनो लोपार्थं वचनमाहोस्विन्नियमार्थम् ?

कथं वा अनोलोपार्थं स्यात्कथं न नियमार्थम्। यदि तावत् "अपत्ये" इति वर्तते ततो नियमार्थम् ? अथ निवृत्तं ततो लोपार्थम्।

अत उत्तरं पठति ब्राह्मस्याजातौ लोपार्थं वचनं क्रियते। अपत्ये इति निवृत्तम्।

तत्राप्राप्तविधाने प्राप्तप्रतिषेधः —

तत्राप्राप्तस्य टिलोपस्य विधाने प्राप्तस्य प्रतिषेधो वक्तव्यः। ब्राह्मणः।

न वा पर्युदाससामर्थ्यात् :—

न वा वक्तव्यः। किं कारणम् ? पर्युदाससामर्थ्यात् पर्युदासोऽत्र भविष्यति।

अस्त्यन्यत्पर्युदासे प्रयोजनम्। किम् ? या जातिश्च नापत्यम् ब्राह्मी ओषधिरिति। न वै अत्रेष्यते। अनिष्टं च प्राप्नोति। इष्टं च न सिध्यति।

एवं तर्ह्यनुवर्तते "अपत्ये" इति। नात्र अपत्ये इत्यनेन निपातनमभिसम्बध्यते। ब्राह्म इति निपात्यते अपत्ये जाताविति। किं तर्हि ? प्रतिषेधोऽभिसम्बध्यते—ब्राह्म इति निपात्यते। अपत्ये जाताविति।

किं तर्हि ? प्रतिषेधोऽभिसम्बध्यते—ब्राह्म इति निपात्यते। अपत्ये जातौ नेति।

प्रदीप-टीका :—ब्राह्मशब्दोऽपत्ये अनपत्ये चेष्यते ब्राह्मो नारदः, ब्राह्मो मुहूर्तः, ब्राह्मः स्थालीपाक इति जातौ त्वपत्ये—ब्राह्मण इतीष्यते। अनपत्ये तु जातौ ब्राह्मी ओषधिरिति टिलोप इष्यते। एतच्च यथाऽभिधानं न सिध्यतीति मत्वा पृच्छति—अथ किमिदमिति।

---

१. ( पा० अ० अ० ६, पा० ४, सू० १७१ ) ॥ इति ॥

यदि तावदिति— ब्राह्मणोऽपत्यमित्यण् । "अल्लोपोऽनः" इत्यकार लोपः प्राप्तः "न संयोगाद्वमन्तात्" इति प्रतिषिद्धः "नस्तद्धिते" इति टिलोपे प्राप्ते "अन्" इति प्रकृतिभावः प्राप्तो "न म पूर्वोऽपत्ये वर्मणः" इति प्रतिषिद्धः ।

ततष्टिलोपे प्राप्ते नियमार्थमिदम् अजातावेवापत्ये टिलोपो भवति । ब्राह्मो नारदः इति जातौ त्वपत्येन भवति, ब्राह्मण इति । एवमपत्ये सिद्ध्यति व्यवस्था । अनपत्ये तु अन् इति प्रकृतिभावात् ब्राह्म शब्दो न सिध्यति ।

अथ निवृत्तमिति । अपत्यग्रहणे निवृत्ते "विधिनियमसम्भवे-विधिरेवज्यायान्" ।

इति अनपत्ये 'अन्" इति प्रकृतिभावे प्राप्ते जातौ टिलोपार्थं निपातनं भवति । तत्र ब्राह्मो मुहूर्तो ब्राह्मः स्थालीपाक इति सिध्यति । ब्राह्मी ओषधिरिति न सिध्यति । अजाताविति प्रतिषेधात् ब्राह्मणी ओषधिरिति तु प्राप्नोति । अपत्ये जातौ ब्राह्मण इति न सिध्यति, "न म पूर्वोऽपत्ये वर्मणः" इति प्रकृतिभावप्रतिषेधाट्टिलोप प्रसङ्गात् ।

न वेति—वक्ष्यमाणोऽभिप्रायः । इतरस्त्वेतमभिप्रायमबुद्ध्वाऽऽह । अस्त्यन्यदिति । ब्राह्मो ओषधिरित्यत्र कृतार्थः पर्युदासः "ब्राह्मणः" इत्यत्र पूर्वसूत्रविहितप्रकृतिभावप्रतिषेधप्राप्तं टिलोपं न निवर्तयेत् ।

न वै अत्रेष्यत इति । "अजातौ" इति पर्युदासः । अचानिष्टाऽर्थे शास्त्रप्रकृतिरिति पर्युदाससामर्थ्यात् ब्राह्मण इत्यत्र टिलोपो न भविष्यतीत्यर्थः ।

इतरस्तु लक्षणमुपालब्धुमाह—अनिष्टं च प्राप्नोतीति ब्राह्मणी ओषधिरिति प्राप्नोति, अजाताविति पर्युदासात् । इष्टञ्च न सिध्यति । ब्राह्मण इति ।

प्रदीप-टीका :—एवं तर्हीति । योगविभागः क्रियत इति भावः । तत्र "ब्राह्मः" इत्यत्र सामर्थ्यात् अपत्ये इति न सम्बध्यते, अपत्ये

टिलोपस्य सिद्धत्वात् तेनानपत्ये सर्वत्र जातावजातौ च ब्राह्म इति निपात्यते।

अपत्येऽपि ब्राह्मो नारदः इत्यत्र परत्वात् "ब्राह्मः" इत्यनेनैव टिलोपो न भवति। ततः "अजातौ" इति तत्रापत्य इत्यनुवर्तते तेनाऽयमर्थो भवति। अपत्ये जातौ ब्राह्मशब्दे टिलोपो न भवति। अजाताविति प्रसज्यप्रतिषेधः, भवतिना नञः सम्बन्धात् इति सर्वेष्टसिद्धिः।

**एतद्भाष्यप्रदीपदर्शनाद् ब्राह्मीत्वमोषधिगता जातिः। ब्राह्मणत्वन्तु असर्वलिङ्गत्वे सति सकृदाख्यातनिर्ग्राह्या जातिर्न तु गोत्रत्वेन।**

**ब्रह्मणो गोत्रापत्यत्वस्य ब्राह्मणे प्रतीतेः। पारिभाषिकगोत्रस्यैव जातित्वं न त्वपत्यमात्रस्येति। ब्राह्मो नारद इति अनन्तरापत्यं न जातिः। व्यक्तेरभेदान्तब्राह्मणत्वं नारदे जातिरिति तु न। बहूनामपि अनन्तरापत्यानां सम्भवात्। इत्येतत् सर्वं प्रतीयते।**

७. निष्ठासूत्रे वार्तिकम्[१] :—

जातिकालसुखादिभ्यः निष्ठा :—

महाभाष्यम् :—निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परवचनम्।

निष्ठायाः पूर्वनिपाते जातिकालसुखादिभ्यः परो निष्ठा भवतीति वक्तव्यम्। सारङ्गजग्धी पलाण्डुभक्षिती। मासजाता। सम्वत्सरजाता। सुखजाता। दुःखजाता।

**अत्र सारङ्गत्वं पशुत्वव्याप्यो जातिविशेषः पक्षित्वव्याप्यश्च। "सारङ्गः पशुपक्षिणोरिति कोशात्"। पलाण्डुत्वं कन्दत्व-**

---

१. (पा० अ० अ० २, पा० २, सू० ३६) ॥ इति ॥

व्याप्यो जातिविशेषः। यद्यपि नैयायिकादिरीत्या मासत्वसंवत्सरत्वे अपि अनेकव्यक्तिवृत्तित्वाद् द्रव्यत्वव्याप्ये जाती, सुखत्वदुःखत्वेऽपि गुणत्वव्याप्ये जाती तथापि वैयाकरणदृष्ट्याऽऽकृतिग्रहणेत्यादि लक्षणचतुष्टयानाक्रान्तत्वाद् न जातयः।

८. अजाद्यतष्टाप् सूत्रे[1] वार्तिकम् :—

शूद्राचाऽमहत्पूर्वा जातिः :—

महाभाष्यम् :—शूद्राचाऽमहत्पूर्वेति वक्तव्यम् शूद्रा अमहत्पूर्वेति किमर्थम् ? महाशूद्री जातिः।

जातिरिति वक्तव्यम्। या हि महती शूद्रा महाशूद्रा सा भवति। शूद्रशब्दोऽजादिषु पठ्यते। तत्र कः प्रसङ्गो यन्महत्पूर्वात्स्यात् ?

नैव प्राप्नोति नार्थः प्रतिषेधेन। तदन्तविधिना प्राप्नोति। ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते।

एवं तर्हि ज्ञापयत्याचार्यः भवतीहतदन्तविधिरिति। किमेतस्य ज्ञापने प्रयोजनम्[2]। भवती, अतिभवती, महती, अतिमहती अत्र तदन्तविधिः सिद्धो भवति। जातिरिति च वक्ष्यामीति।

यद्येतज्ज्ञाप्यते—पञ्चाजी, दशाजी, अत्रापि प्राप्नोति। नैष दोषः। अजादिभिरत्र स्त्रियं विशेषयिष्यामः।

अजादीनां या स्त्रीति।

प्रदीप-टीका :—शूद्रा चेति। जातिलक्षणो ङीष् अनेन टापा बाध्यते न तु पुंयोगलक्षणः, गौणमुख्ययोर्मुख्ये संप्रत्यय इति न्यायान्मुख्यार्थवृत्तेरिहशूद्रशब्दस्य ग्रहणात्। तेन शूद्रस्य भार्या शूद्री इत्येव भवति। अमहत्पूर्वेत्यत्र महच्छब्दस्यानुकरणशब्दत्वाल्लौकिकार्थाभिधायित्वाभावादात्वाभावः।

---

१. ( पा० अ० अ० ४, पा० १, सू० ४ ) ॥ इति ॥

२. ( म० भा० अ० ४, पा० १, आ० सू० ४ ) ॥ इति ॥

अमहत्पूर्वेति किमर्थम् ? अन्तरङ्गत्वात् पूर्वं टापि कृते सुप्युत्पन्ने समासेन भाव्यम्—महती शूद्रा महाशूद्रेति, ततश्च निर्वृत्तत्वाट्टापः प्रतिषेधो नर्थकः इति प्रश्नः।

महाशूद्रीति। महाशूद्रशब्दः समुदाय एवाभीरजातिवचनो नेत्वत्रा-वयवार्थोऽस्ति, यथा गौर-खर इति तत्र समुदायव्युत्पादनेऽवयवार्थस्य स्त्रीत्वाऽभावात्तदविवक्षित्वैव समासः क्रियते।

ततष्टापि प्रतिषिद्धे जातिलक्षणो ङीषेव 'भवति' जातिरिति। महाशूद्रसमुदायो यदा जातिवाची तदा टापः प्रतिषेधः। यदा तु महत्वविशिष्टा शूद्रा प्रतिपिपादयिषिता तदा महाशूद्रेत्येव भवति। असति तु जातिग्रहणे, अमहत्पूर्वेति प्रतिषेध सामर्थ्यादन्तरङ्गोऽपि टाब्बाध्येत ततश्चात्रापि ङीष् प्रसज्यते।

अतिभवतीति—भवन्तमतिक्रान्ता महान्तमतिक्रान्तेति प्रादिसमासः। तत उगितश्चेत्यनेनोगिदन्तादपि ङीष् सिद्धो भवति। गौरादिषु बृहन्महच्छब्दौ न पठितव्यौ। तथा च शतुरनुम इत्यत्र नद्यजाद्युदात्तत्वे बृहन्महतोरूपसंख्यानमित्युक्तम्। अन्यथा ङीष एवोदात्तत्वेन सिद्धत्वात्। किं ङीप उदात्तविधानेन ? विभक्त्युदातार्थं तद्वचनमिति चेत् ?

किं गौरादिषु पठनेन प्रयोजनम्। अनुपसर्जनाधिकाराच्चाति-महतीत्यत्र गौरादिङीष भावादुगिल्लक्षणो ङीप् कर्तव्यस्तस्य चोदात्तमुप-संख्यानेन कर्तव्यम्। जातिरिति च वक्ष्यामीति। अन्यथा महत्पूर्वेत्यसति प्रतिषेधे महाशूद्री महाशूद्रा शब्दयोर्विषयविभागेन कथं साधुत्वं प्रतीयेतेति भावः।

पञ्चाजीति—पञ्चानामजानां समाहार इति। द्विगुः। ततो द्विगोः इति ङीन्न प्राप्नोति। टापा वाध्यमानत्वात्।

अजादीनामिति—अजाद्यत इति षष्ठी। तेनाजादिप्रातिपदिका-भिधेय समवेतं स्त्रीत्वमिह गृह्यते। पञ्चाजीत्यत्र तु समासाविधेय-समाहार गतं स्त्रीत्वं नत्वजादिशब्दगतमिति टापोऽप्रसङ्गः। प्रत्यासत्या च

स्त्रीत्वविशेषणोपक्षीणमप्यजादीनामेव प्रकृतित्वं विज्ञायते, सामर्थ्याद्वा। एवं तु सत्यमहत्पूर्वेति न प्रतिषेधो वक्तव्यः। नहि महाशूद्रीत्यत्र शूद्रार्थगतं स्त्रीत्वमिति टापः प्रसङ्गाभावः।

**एतद्भाष्यप्रदीपदर्शनेन शूद्रत्वं वर्णत्वव्याप्या जातिरिति महाशूद्रत्वं तु आभीरस्वरूपं शूद्रत्वव्याप्या जातिरिति असर्वलिङ्गत्वे सति सकृदाख्यातनिर्ग्राह्येति प्रतीयते।**

९. बहुव्रीहेश्चान्तोदात्ताद् सूत्रे वार्तिकम्[1] :—

अन्तोदात्ताज्जातप्रतिषेधः :—

महाभाष्यम् :—अन्तोदात्तेजातप्रतिषेधः। अन्तोदात्ते प्रतिषेधो वक्तव्यः। दन्तजाता, स्तनजाता।

प्रदीप-टीका :—दन्तजातेति। "वा जातेः" इत्यन्तोदात्तत्वं वा भवति।

जातिपूर्वाद्वा :—

अथवा जाति पूर्वादिति वक्तव्यम्।

प्रदीप-टीका :—अथवेति—बहुव्रीहावन्तोदात्त निमित्तेष्वन्येषु निषिद्धेषु जातिरेवान्तोदात्तनिमित्तं क्तान्तस्यावशिष्यत इति जातिग्रहणमेवात्र कर्तव्यमित्यर्थः।

**अत्र दन्तत्वं स्तनत्वञ्चाकृतिग्राह्ये जाती।**

१०. ऊङुतःसूत्रे वार्तिकम्[2] :—

अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम् :—

महाभाष्यम् :—उङ्प्रकरणे प्राणिजातेश्चारज्ज्वादीनामिति वक्तव्यम्। अलाबूः, कर्कन्धूः।

---

१. ( पा० अ० अ० ४, पा० १, सू० ५२ ) ॥ इति ॥
२. ( पा० अ० अ० ४, पा० १, सू० ६६ ) ॥ इति ॥

अप्प्राणिजातेरिति किमर्थम्। कृकवाकुः। अरज्ज्वादीनां किमर्थम्। रज्जुः हनुः।

**अत्र अलाबू-कर्कन्धू-शब्दौ तदवाच्ये जाती च प्राग् व्याख्याते। कृकेण गलेन वक्तीति कृकवाकुः। गिरगिट इति भाषायाम्। कृकवाकुत्वमाकृतिग्राह्योजातिविशेषः। एवं रज्जुत्वमपि। हनुर्वदनैकदेशो वामदक्षिणभागावयवेन विभक्तः। वामो हनुरभज्यत इति दर्शनात्। हनुत्वमपि आकृतिग्राह्या जातिः।**

प्रदीप-टीका :—अलाबूरिति। ऊङि सति "नोङ् धात्वोः" इति विभक्तेरुदात्तत्वनिषेधो भवति अलाब्वेति।

११. राजश्वसुराद्यत्सूत्रे वार्तिकम्[1] :—

राज्ञोऽपत्ये जातिग्रहणम्:—

महाभाष्यम् :—राज्ञोऽपत्ये जातिग्रहणम्। राज्ञोऽपत्ये जातिग्रहणं कर्तव्यम्। राजन्यो नाम जातिः। क्व मा भूत् ? राजन इति।

प्रदीप-टीका :—जातिग्रहणमिति। यदा प्रकृतिप्रत्ययसमुदायेन जातिर्गम्यते तदा प्रत्ययो नान्यदा। तेन क्षत्रियजातौ प्रतिपिपादयिषितायां राजन्यशब्दस्य प्रयोगः, वैश्यशूद्रे वा राजाऽपत्ये राजन शब्दप्रयोगः।

**अत्र राजन्यत्वं क्षत्रियत्वरूपमसर्वलिङ्गत्वे सति सकृदाख्यातनिर्ग्राह्या जातिः॥**

१२. चतुष्पादो गर्भिण्या इति सूत्रे वार्तिकम्[2] :—

महाभाष्यम् :—चतुष्पाज्जातिरिति वक्तव्यम्। इह माभूत् कालाक्षी, गर्भिणी। स्वस्तिमती गर्भिणी।

---

१. ( पा० अ० अ० ४, पा० १, सू० १३७ ) ॥ इति ॥
२. ( म० भा० अ० २, पा० १, आ० ३, सू० ७१ ) ॥ इति ॥

प्रदीप-टीका :—चतुष्पाज्जातिरिति। केचिज्जातिग्रहणमनुवर्त्यमित्याहुः। अन्येत्याहुः। शब्दान्तरसन्निधिनिरपेक्षा ये चतुष्पाज्जातिवचनास्त एवान्तरङ्गत्वाद् गृह्यन्ते न तु कालक्षयादयो यौगिकाः शब्दान्तरसन्निधानाच्चतुष्पाज्जातिविषयाः।

**अत्र विषये यद् वक्तव्यम् तत् प्रागेव सूत्रदृष्ट्या जातिविमर्शावसरे उक्तम्।**

**इति व्याकरणमहाभाष्ये तद् व्याख्याने प्रदीपे च जातिनिर्देशः।**

**॥ इति प्रथमोऽध्यायः समाप्तः ॥**

———

# अथ द्वितीयोऽध्यायः

## १. जातिर्जन्मना गुणकर्मभ्यां वेतिविमर्शः

**तत्राद्य प्राचीनानां पक्षः, आधुनिकानान्तु द्वितीयः।**

आद्यपक्षे गुणकर्मणी जात्याश्रयमुत्कर्षयन्ति, द्वितीयपक्षे तु जाति जनयन्ति इति। उभयेऽपि वादिनः स्वस्वपक्षे इमं मन्त्रं प्रमाणी-कुर्वन्ति :—

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।
ऊरू तदस्य यद् वैश्यः पद्भ्याᳬ शूद्रो अजायत[1] ॥ इति ॥

तत्रार्वाचीना मन्त्रमेनमेवं व्यचक्षते। अस्य पुरुषसमाजस्य ब्राह्मणो-गुणकर्मभ्यां मुखमासीद्। बाहुद्वयं क्षत्रियः कृतः, ताभ्यामेव वैश्योऽस्य ऊरुद्वयस्थाने कृतस्ताभ्यामेव अस्य पद्भ्यां तत्तद्व्यवहारमूलत्वेन पादस्थानीयाभ्यां गुणकर्मभ्यां सेवार्थं कल्पिताभ्यां शूद्रोऽजायत इति।

प्राचीनास्तु :—यद् व्याचक्षुस्तदित्थम् शक्यार्थबाधाभावे लक्षणाया अनौचित्येन परमात्मनः पद्भ्यां शूद्रोऽजायत इत्येवार्थः। सृष्टिप्रकरणे पुरुषसूक्ते श्रुतस्यास्य मन्त्रस्यास्मिन्भागेऽयमेवार्थो युक्तः। एतत्प्र-

---

१. ( यजु० वा० सं० ३१।११ ) ॥ इति ॥

करण यमन्त्रान्तर-संवादाच्च । ततश्चास्य मन्त्रस्य पादान्तरेष्वपि मुखाद् ब्राह्मणः, बाहुभ्यां क्षत्रियः, ऊरूभ्यां वैश्य इत्यर्थं एव युक्तः ।

पञ्चभ्यः स्थाने प्रथमा विभक्तिर्यथायथमादेशरूपा सुपां सुलुक् पूर्वसवर्णेत्यादिसूत्रेण । अतः सर्गादौ परमात्मनोऽङ्गेभ्यो ब्राह्मणादयो वर्णा उत्पन्ना इति न गुणकर्मवृत्ता जतिव्यवस्थाऽतः सिध्यति ।

अस्मान्मन्त्रात्पूर्वस्मिन् मन्त्रे—

यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्यासीत्किम्बाहू किमूरूपादा उच्च्येते ॥

इत्यत्र प्रथमा विभक्तिः कार्यकारणयोरभेदोपचारेण । अस्य किं मुखामासीद् ब्राह्मण इति । एवमग्रेऽपि । ब्राह्मणोऽस्य मुखमासीदिति-मन्त्रस्य चतुर्थपादस्तु सर्गप्रकरणस्योपसंहारभूत इति तदर्थे एव मन्त्रस्य तात्पर्येण तदनुरोधेन ततः पूर्वेषु पादेषु मन्त्रे च पूर्वस्मिन् पञ्चम्यर्थे एव प्रथमा प्रागुक्तरीत्या युक्ता ।

उत्तरस्मिन् मन्त्रद्वयेऽपि—

चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
श्श्रोत्राद् वायुश्च प्राणश्च मुखादग्निरजायत[२] ॥
नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत ।
पद्भ्याम्भूमिर्दिशः श्रोत्रात् तथा लोकाँ अकल्पयन्[३] ॥

पञ्चम्येव दृष्टेति पूर्वेषु अपि मन्त्रभागेषु पञ्चम्यर्थं एव युज्यते प्रथमाया इति । किञ्च वेदेषु सर्वत्र सृष्टिकर्ता परमात्मैव श्रुत इति नात्र मन्त्रे पुरुषपदेन परमात्मानमपहाय मनुष्यसमाजो ग्रहीतुं युक्तः किञ्च सर्ववेदेषु प्राचीने ऋग्वेदे पुरुषसूक्ते सप्तमो मन्त्रः—

---

१. ( यजु० ३१।१० ) ॥ इति ॥
२. ( यजु० ३१।१२ ) ॥ इति ॥
३. ( यजु० ३१।१३ ) ॥ इति ॥

तं यज्ञम्बर्हिषि प्रौक्षन् पुरुषञ्जातमग्रतः[1] ।

अत्र यज्ञपुरुषो यजनीयो विष्णुः । यज्ञो वै विष्णुः[2] । अतोऽपि प्रकृते इदं पदेन पुरुषसमाजरूपोऽर्थो न ग्राह्यः ।

तस्माद् यज्ञात् सर्वहुतः सम्भृतम्पृषदाज्यम् ॥
तस्माद्यज्ञात् सर्वहुत ऋचः सामानि यज्ञिरे[3] ॥

आभ्यां मन्त्राभ्यामपि यज्ञपुरुषाद् विष्णोरेव वेदानां सर्वकारणानामुत्पत्तिरुक्ता । पञ्चमीविभक्तिरेव च दृश्यते । तस्मात्पुरुषसमाजो न ग्राह्यः । किञ्च पुरुषसमाजरूपार्थग्रहणे वेदानां पुरुषकर्तृकत्वेन-पौरुषेयत्वापत्तिः । तच्चानिष्टम् ।

सहस्रशीर्षा पुरुषः[4] :—इति पुरुषसूक्तस्यादिमे मन्त्रे पुरुषपदेन परमात्मैवोक्तः । अत एव वेदानामुत्पत्तिरुक्ता ।

तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावोह जज्ञिरे तस्मात्तस्माज्जाता अजावयः[5] ॥

अत्र मन्त्रेऽपि तस्मादेव यज्ञपुरुषादश्वादिसर्ग उक्ते न मनुष्य-समाजात् । पञ्चमी विभक्तिरेव च श्रुता । अस्मान्मन्त्रादनन्तरमेव प्रकृतिविचारगोचरो मन्त्रो दृश्यते :—

यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्यासीत्......इत्यादि[6] ॥

अत्र मन्त्रे तस्यैव भगवतो मुखादि कार्यविषयकः प्रश्न उपलभ्यते । अतः प्रथमा विभक्तिः कार्यकारणयोरभेदोपचारेण दृश्यते । किञ्चात्र प्रथमा विभक्तिः पञ्चम्याः स्थाने आदेशः सुपां सुलुगित्यादिसूत्रेण । अतः मुखात् किमासीदित्यादिकोऽर्थो बोध्यः । तदुत्तरभूतो द्वादशो

---

१. ( १०।९०।७ ) ॥ इति ॥
२. ( शत० १।१।२।१३ निघ० ३।१७ ) ॥ इति ॥
३. ( ऋक् सं० १०।९०।९ ) ॥ इति ॥
४. ( ऋक्० १०।९०।१ ) ॥ इति ॥
५. ( यजु० ३१।१० ) ॥ इति ॥
६. ( यजु० ३१।१० ) ॥ इति ॥

मन्त्रः — ब्राह्मणोऽस्य मुखमासीदित्यादि। तत्रापि मुखमासीदित्यादिकोऽर्थो बोध्यः। अन्यत्र मन्त्रे "मुखादग्निरजायत[1]" इति मन्त्रे यथा मुखतोऽग्निसर्ग उक्तस्तथैवात्र ब्राह्मणोऽग्निश्च शास्त्रेषु एकवर्णाविव मन्येते। "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्[2]" इत्यादिमन्त्रैः परमात्मनो दिव्यविग्रहवत्त्वं बोध्यते तेन परमात्मा न निराकारः किन्तु साकारः स्रष्टा।

प्रथमम् ऋग्वेदे वेदसर्गस्ततः पशुसर्गस्ततो देवसर्गस्ततो मनुष्यसर्ग उपन्यस्तः। सर्वत्रैव च पञ्चमीप्रयोग एवोपादानेऽपादनत्वबोधनाय कृतः, अतो ब्राह्मणोऽस्य मुखमासीत् इत्यादावपि पञ्चम्यर्थकविभक्ति-प्रयोग एव युक्तः। उपपादितञ्च प्राक् प्रथमायाः पञ्चम्यर्थकत्वम्। कार्यकारणयोरभेदोपचारादपि प्रथमा विभक्त्युपपत्तिः कर्तुं शक्या। ब्राह्मणोऽस्य मुखमासीत् इत्यत्र पञ्चम्यर्थाऽपरिग्रहेऽपि पुरुषसमाजस्य मुखरूपे ब्राह्मणत्वजात्याऽऽक्रान्त एव जात इति लभ्यते गुणकर्मभ्यां तु जातेरुत्कर्षः क्रियेत इत्येव लभ्यते। एवं जन्मनैव जातिः सिध्यति, न गुणकर्मभ्याम्।

किञ्च यथा मुखबाह्वादीनां स्वस्वगुणकर्माभावेऽपि यथा मुखबाह्वादि शब्दवाच्यत्वमेव, ब्राह्मणादिवर्णानां स्वस्वगुणकर्मा-भावेऽपि ब्राह्मणादित्वमेव न त्वन्यजातिमत्त्वम्। यदा जन्मैव जातीनां नियामकं तथा गुणकर्मभ्यां जातिपरिवर्तनं कर्तुं न शक्यते। एकस्य जन्मद्वयाभावात्। प्रागुक्तश्रुत्यनुसारेण सर्गादौ ब्राह्मणः परमात्मनो मुखाज्जाताः। ततः परं तु स्वस्वमातापितृभ्यः, "सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः" इति मनुस्मरणात्[3]। एवञ्च परमात्ममुखादि-जत्वमिव सवर्णेभ्य सवर्णासु जातत्वमपि ब्राह्मणत्वं वर्तमान-ब्राह्मणादिजन्मनियामके, एतज्जन्मकृते तु ते एतज्जन्मन उत्कर्षाऽधायके।

१. ( युज० ३१।१२ ) ।। इति ।।
२. ( ऋक्० १०।९०।१ ) ।। इति ।।
३. ( मनुस्मृतिः ) ।। इति ।।

अत्र मूलानि सतिमूले तद् विपाका जात्यायुर्भोगाः[1]। कारणं गुणसङ्गोऽस्य सदसद् योनिजन्मसु[2] इति। अतो जातिर्जन्मनैवेति सिद्धम्।

साम्प्रतं वर्णव्यवस्थाविषये नानाविधाः भ्रान्तयः सम्भवन्त्यः स्वविषयमुन्मूलयितुं प्रवृत्ता दृश्यन्ते। अतस्तासां निराकरणमत्र प्रसङ्गागतं क्रियते। तत्र गुणकर्मनिमित्तकवर्णव्यवस्थानियामकं प्रमाणत्वेनाभिमतं प्रागुपन्यस्य तस्य जन्मनिमित्तकवर्णव्यवस्थापरत्वं विज्ञाप्यते। तत्र केचित्—वृतं स्मृतं ब्राह्मणलक्षणं तु भविष्य-पुराण-वचनम्[3] गुणकर्मणो वर्णव्यवस्थापकत्वे प्रमाणत्वेनोदाहरन्ति। अत्र वृत्तमाचारस्तच्च कर्मैव इति वदन्ति। तन्न जन्मनो जातिनियामकत्वे विरुध्यते। ब्राह्मणलक्षणमित्यस्य ब्राह्मणत्वस्य जन्मसिद्धस्य ज्ञापकमित्यर्थः।

अयं ब्राह्मण इति ब्राह्मणोचितेनाचारेण ज्ञायते इति यावत्। अस्य भविष्यवाक्यस्य पूर्वार्धमस्ति 'शिल्पं हि वेदाध्ययनं द्विजानाम्' इति। अतो वेदाध्ययनमपि न ब्राह्मणत्वजातिनियामकम्। ब्राह्मणत्वजात्या-श्रयस्योत्कर्षमात्राधायकत्वात्। अतएव—

वृत्तं यत्नेन संरक्ष्यं ब्राह्मणेन विशेषतः।
अक्षीणवृत्तो न क्षीणो वृत्ततस्तु हतो हतः[4]।
आचाराद्विच्युतो विप्रो न वेदफलमश्नुते।
आचारेण तु संयुक्तः सम्पूर्णफलभाग्भवेत्[5]।

इति पद्याभ्यामेतदेव समर्थ्यते। यदि केवलं वृत्तमेव ब्राह्मणत्व-नियामकं तदा तस्य वर्णत्रयेऽपि स्वकीयस्य सत्त्वात् तस्योच्छेद एव प्रसज्यते। अतः :—

---

१. ( यो० सा० १३ ) ॥ इति ॥
२. ( गी० १३।२१ ) ॥
३. ( भ० पु० ब्रा० पर्व० ४१ ८ ) ॥ इति ॥
४. ( म० भा० व० प० ३१३।१०६ ) ॥ इति ॥
५. ( मनु० १।१०६ ) ॥ इति ॥

शृणु यक्षकुलं तात न स्वाध्यायो न च श्रुतम् ।
कारणं हि द्विजत्वे च वृत्तमेव न संशयः[1] ॥

इति पद्यमपि वृत्तप्रशंसापरमर्थवादमात्रम् ।

"चतुर्वेदोऽपि दुर्वृत्तः स शूद्रादतिरिच्यते[2] ।"

इति पद्यन्तु दुर्वृत्तनिन्दापरमर्थवादरूपम् ।

अतएव ब्राह्मणस्य विद्यातपसी वृत्तञ्च पात्रत्वसंपादकानि एव समर्थ्यन्ते न वर्णसंपादकानि । तद्यथा—

न विद्यया केपलया तपसा वाऽपि पात्रता ।
यत्र वृत्तिमिमे चोभे तद्धि पात्रं प्रकीर्तितम्[3] ॥इति॥

एवम् :—

न कुलेन न जात्या वा क्रियाभिर्ब्राह्मणो भवेत् ।
चाण्डालोऽपि हि वृत्तस्थो ब्राह्मणः स युधिष्ठिरः ॥
शूद्रोऽपि शीलसंपन्नो गुणवान् ब्राह्मणो भवेत् ।
ब्राह्मणोऽपि क्रियाहीनः शूद्रात्प्रत्यवरो भवेत् ॥
"न जातिर्दृश्यते तावद् गुणाः कल्याणकारकाः[4] ॥

अत्र पद्येषु चाण्डाले शूद्रे च स्वस्वगुणकर्मवृत्तसंपन्ने ब्राह्मणत्वारोपात् । प्रशंसारूपोऽर्थवादः । न तु वस्तुतस्तत्र ब्राह्मणत्वम् । सवर्णेभ्यः सवर्णासु जायन्ते हि सजातय इति मनुवचनविरोधात् । न जातिर्दृश्यते इत्यादेश्चायमर्थः । यद्यपि शीलादिसंपन्ने शूद्रे ब्राह्मणत्वजातिर्न दृश्यते तथापि तस्य गुण एव ब्राह्मणस्येव कल्याणकारकः । क्रियाभिर्हीनो ब्राह्मणस्तु शूद्रादपि प्रत्यवरो निकृष्टो भवेदिति । एतच्च विहितक्रियाविरहितस्य ब्राह्मणस्य निन्दापरम् । न तु ब्राह्मणत्वं तस्य नश्यति । ब्राह्मणस्तु इति ब्राह्मणपदेन तदापि तस्य निर्देशात् । एवम् :—

१. ( म० भा० व० प० ११३।१०८ ) ॥ इति ॥
२. ( म० भा० व० प० ३१३।१११ ) ॥ इति ॥
३. (याज्ञ० स्मृ० १।२०० ) ॥ इति ॥
४. ( महा० भा० वन०-अनु० प० ) ॥ इति ॥

न योनिर्नापि संस्कारो न श्रुतं न च संततिः।
कारणानि द्विजत्वस्य वृत्तमेव तु कारणम् ॥
"वृत्ते स्थितश्च शूद्रोऽपि ब्राह्मणत्वं स गच्छति[१] ।"

एतान्यपि पद्यानि इतरनिषेधमुखेन स्वविधिमुखेन च वृत्तप्रशंसा-रूपाणि अर्थवादवाक्यान्येव अन्यथा श्रुतसंस्कारयोरपि वस्तुतो निषेधे विरोधिपक्षोऽपि न सिध्येत् ।

शुद्धात्मा विजितेन्द्रियः शूद्रोऽपि द्विजवत्सेव्यः[२] ।
स्वभावः कर्म च शुभं यत्र शूद्रेऽपि तिष्ठति ॥
विशिष्टः सद्द्विजातेर्वै...... ... ... ... ... ... ... ।

इत्यादि पद्यानि तु स्पष्टमेवार्थवादरूपाणि ।

शूद्रब्राह्मणयोर्भेदो मृग्यमाणोऽपि यत्नतः ।
नेक्ष्यते सर्वधर्मेषु संहतैस्त्रिदशैरपि[३] ॥

इति पद्यमपि न जन्मना जातिपक्षं विहन्तुमीष्टे । शूद्रब्राह्मणयो-रवयवसंस्थानस्य समानत्वेन तयोर्भेदस्याग्राह्यत्वात् । शूद्रमाता पितृ-जत्वं ब्राह्मणमातापितृजत्वन्तु तयोर्भेदस्याभिव्यञ्जकमस्त्येव । सवर्णेभ्यः सवर्णासु जायन्ते हि सजातय इति मनुस्मरणात् ।

ममाऽनुस्मरणं नित्यं भक्त्या श्रद्धापुरस्कृतम् ।
षोडशाङ्गा भक्तिरियं यस्मिन् म्लेच्छेऽपि वर्तते ॥
विप्रेन्द्रः स मुनिः श्रीमान् स जात्या स च पण्डितः ।
न मे पृथक् चतुर्वेदो मद्भक्तः श्वपचोऽपि यः ।
तस्मै देयं ततो ग्राह्यं स हि पूज्यो यथा ह्यहम्[४] ॥

एतानि पद्यान्यपि भगवद्भक्तिप्रशंसापराणि अर्थवादरूपाणि । तथा हि—म्लेच्छेऽपि वर्तमानया षोडशाङ्गभक्त्या विप्रेन्द्रत्वमुनित्वादि-

---

२. ( महा० अनु० १४३।५० ) ॥ इति ॥
१. ( महा० भा० १३।१४३।४८ ) ॥ इति ॥
२. ( भविष्य० ब्राह्म० ४१।३६ ) ॥ इति ॥
३. ( भविष्य० ब्रह्मपर्व० १५२।२७।२८।२६ ) ॥ इति ॥

संपत्तिः संभाविता इति। अपि शब्दः सम्भावनायाम्। एवं श्वपचोऽपि यः इत्यत्रापि यः शब्दः संभावनायाम्। मद्भक्तस्य श्वपचस्यापि प्रतिगृहीतृत्वपूज्यत्वे संभाविते न तु चतुर्वेदस्य ब्राह्मणस्य ममाभक्तस्येति। संभावनाविषयश्चार्थो न तथ्य इति।

मतङ्गश्च चाण्डालयोनौ जातो गुणकर्मभ्यां प्रयतमानोऽपि न ब्राह्मण्यमाप्तवान् तत्र चार्थे इमे महाभारतस्य श्लोका भवन्ति।

इन्द्रवाक्यं मतङ्गं प्रति :—

ब्राह्मण्यं प्रार्थयानस्त्वमप्राप्यमकृतात्मभिः।
विनशिष्यसि दुर्बुद्धे तदुपारममाचिरम्[१]॥
देवताऽसुरमर्त्येषु तत्पवित्रं परं स्मृतम्।
चाण्डालयोनौ जातेन न तत्प्राप्यं कथंचन[२]॥
तदुत्सृज्येह दुष्प्रापं ब्राह्मण्यमकृतात्मभिः।
अन्यं वरं वृणीष्व त्वं दुर्लभोऽयं हि ते वरः[३]॥
बह्वीस्तु संविशन् योनीर्जायमानः पुनः पुनः।
पर्याये तात कस्मिंश्चिद् ब्राह्मणो नाम जायते[४]॥

मतङ्गवाक्यमिन्द्रं प्रति :—

एकारामो ह्यहं शक्र! निर्द्वन्द्वो निष्परिग्रहः।
अहिंसादममास्थाय कथं नार्हामि विप्रताम्[५]॥
देवं तु कथमेतद् वै यदहं मातृदोषतः।
एतामवस्थां संप्राप्तो धर्मज्ञः सन् पुरन्दर[६]॥

---

१. ( म० भा० अ० शा० प० २७।२८ ॥ इति ॥
२. ( म० भा० अ० शा० ३० ) ॥ इति ॥
३. ( म० भा० अ० शा० प० २९।१२।१३ ) ॥ इति ॥
४. ( म० भा० अ० शा० प० २९।११ ) ॥ इति ॥
५. ( मा० भा० आ० शा० प० २९।१७ ) ॥ इति ॥
६. ( म० भा० अ० शा० प० १८ ) ॥ इति ॥

नूनं दैवं न शक्यं हि पौरुषेणातिवर्तितम्।
यदर्थं यत्नवान् शक्र न लभे विप्रतां प्रभो[1]।। इति ।।

श्रवणकुमारोऽपि शूद्रायां वैश्याज्जातो न गुणकर्मभ्याम् ब्राह्मण्यमाप। तेन स्वयमेव स्वस्य शूद्रवैश्ययोः संकरत्वोक्तेः।

अजामिलस्तु जन्मनैव ब्राह्मण आसीत्। दासीपतित्वात्तु तस्य व्रात्यता जाता।

कान्यकुब्जे द्विजः कश्चिद् दासीपतिरजामिलः[2]। इति भागवते स्मरणात्।

महाभारते वनपर्वणि सर्पयुधिष्ठिरसंवादे उपलभ्यमानानि वाक्यान्यपि न गुणकर्मभ्यां जातिं व्यवस्थापयन्ति। तथा हि—

शूद्रे तु यद् भवेल्लक्ष्म द्विजे तच्च न विद्यते।
न वै शूद्रो भवेत् शूद्रो ब्राह्मणो न च ब्राह्मणः[3] ।। इति ।।

अस्मात्पद्यात्पूर्वं युधिष्ठिरं सर्पोऽपृच्छत्।

ब्राह्मणः को भवेद्राजन् वेद्यं किञ्च युधिष्ठर[4]।

अस्योत्तरमाह युधिष्ठिरः—

सत्यं दानं क्षमा शौचमानृशंस्यं तपो घृणा।
दृश्यते यत्र नागेन्द्र स ब्राह्मण इति स्मृतः[5] ।।

अत्र पुरुषविशेषे वर्णसांकर्यसंभावनया ब्राह्मण्यसंशये ब्राह्मणलिङ्गान्येतानि दर्शितानि, न तु गुणकर्मभ्यां वर्णव्यवस्थायै। यदि सत्यदानक्षमाऽदिभिरेव शूद्रादीनामपि ब्राह्मणत्वमिष्टं तदा युधिष्ठिरकृष्णजनकादिषु एतेषां ब्राह्मणगुणानां सत्वात् परशुरामद्रोणकृपेषु च

---

१. ( म० भा० अ० श० प० १९ ) ।। इति ।।
२. ( म० भा० म० पु० ६।१।२१ ) ।। इति ।।
३. ( म० भा० व० प० १८०।२५ ) ।। इति ।।
४. ( म० भा० व० प० १८०।२० ) ।। इति ।।
५. ( म० भा० व० प० ३।१८०।२१ ) ।। इति ।।

क्षत्रियगुणानां सत्त्वात् कुतो न कृष्णादिषु ब्राह्मणत्वव्यवहारः, परशुरामादिषु च क्षत्रियत्वव्यवहारो दृश्यते। तत्रैवाग्रे सर्पवाक्यम् :—

चातुर्वर्ण्यं प्रमाणञ्च सत्यञ्च ब्रह्म चैव हि।
शूद्रेष्वपि च सत्यञ्च दानमक्रोध एव च[3] ॥
आनृशंस्यमहिंसा च घृणा चैव युधिष्ठिर[4] !।

अत्र स्पष्टमेव महाभारतकृतो जन्मना जातिवादोऽभिप्रेतः प्रतीयते। शूद्रेषु अपि एते गुणा दृश्यन्तेऽतस्तेषां कुतो न ब्राह्मण्यव्यपदेश इत्याक्षेपात्। एतस्य समाधानमाह युधिष्ठिरः।

शूद्रे तु यद् भवेल्लक्ष्म द्विजे तच्च न विद्यते।
न वै शूद्रो भवेत् शूद्रो ब्राह्मणो न च ब्राह्मणः[5] ॥

अस्यार्थः :—

यद् ब्राह्मणलक्ष्मशूद्रे भवेत् द्विजे तच्च न विद्यते स शूद्रः शूद्रो न भवेत् स च स्वलक्ष्महीनो ब्राह्मणो न भवेत् इति।

अत्र शूद्रो न भवेत् इत्यस्य शूद्रत्वजातिसत्वेऽपि इतरशूद्रवत्-तिरस्कार्यो न भवेत्, किन्तु दानमानाभ्यां सत्कार्यो भवेत्।

अन्यथा शूद्रः न भवेदित्यत्र यथा श्रुते उद्देश्यतावच्छेदकतद्भाव-योरेकत्र बाधादाहार्यत्वं प्रसज्येत। एवं ब्राह्मणत्वजातिसत्वेऽपि दानमानाभ्यां ब्राह्मणवत् सत्कार्यो न भवेत्। दृश्यते च पुराणेषु शूद्रस्यापि सूतस्य नैमिषारण्ये ऋषिभिर्व्यासासनदानेन पुरस्कृतत्वम्। बलरामेण तत्र शूद्रत्वबुद्ध्यैव हननात्।

ब्रह्महत्याव्रतन्तु तत्र ऋषिभिर्ब्रह्मत्वाऽतिदेशात्। किञ्च ब्राह्मण स्वलक्ष्मरहिते इतरवर्णलक्ष्मसहिते च इतरजात्यतिदेश एव न तु तत्र इतरजातिरितरवर्णलक्ष्मभिर्निष्पद्यते इत्यत्र प्रमाणमत्रिस्मृतिवाक्यम्।

---

३. ( म० भा० व० प० १८०।२३ ) ॥ इति ॥
४. ( म० भा० व० प० १८०।२४ ) ॥ इति ॥
५. ( म० भा० व० प० १८०।२५ ) ॥ इति ॥

देवो मुनिर्द्विजो राजावैश्यः शूद्रो निषादकः ।
पशुर्म्लेच्छोऽपि चाण्डालो विप्रा दशविधाः स्मृताः[1] ॥
दश भेदाश्च तत्रैव दर्शिताऽत्रिमहर्षिणा ।

चाणक्यनीतौ च ११।१३।१५।१६१ अध्यायेषु महाभारते शान्ति पर्वणि ७६ अध्याये च द्रष्टव्याः । ब्राह्मणे शूद्रशब्दप्रयोगश्च प्रकृते वतिं विनापि आतिदेशिको बोध्यः । तदुक्तं महाभाष्ये :—

अन्तरेणापि वतिमतिदेशो गम्यते । यथा एष ब्रह्मदत्तः । अब्रह्मदत्तं ब्रह्मदत्त इत्याह, तेन मन्यामहे ब्रह्मदत्तवदयं भवतीति[2] । एवञ्च :—

यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः ।
यत्रैतन्न भवेत् सर्प ! तं शूद्रमिति निर्दिशेत्[3] ॥

इत्यत्रापि वतिं विनाऽपि अतिदेशो बोध्यः । किञ्च यदि ते वृत्ततो राजन् ब्राह्मणः प्रसमीक्षितः । वृथा जातिस्तदायुष्मम् कृतिर्यावन्न[4]-विद्यते ।

इति पद्ये यदि कर्म न विद्यते तदा जातिर्वृथा स्यात् इति कर्माभावे जातिवैयर्थ्यं प्रश्न एव नोपपद्यते यदि जन्मना जातिर्न स्यात् । अस्य चोत्तरमाह युधिष्ठिरः :—

जातिरत्र महासर्प ! मनुष्यत्वे महामते ! ॥
संकरात्सर्ववर्णानां दुष्परीक्ष्येति मे मतिः[5] ॥

अत्र वर्णसांकर्यसंशये तत्तद्वर्णलक्ष्मभिर्जातिः निर्धारयेदिति समाधानाऽभिप्रायः । यथा मतङ्गो ब्राह्मणपत्न्यां नापितसंबन्धाद्

---

१. ( अ० स्म० २ श्लोक ३७ ) ॥ इति ॥
२. ( महाभाष्यम् १।१। २३ ) ॥ इति ॥
३. ( महा० वन० १८०।२६ ) ॥ इति ॥
४. ( महा० वन० १८०।३० ) ॥ इति ॥
५. ( महा० वन० १८०।३१ ) ॥ इति ॥

जातः। स च जन्मना प्रच्छन्नश्चाण्डालजातिरपि नृशंसकर्मणा गर्दभशिशुत्ताऽऽनेन चाण्डालत्वेन निर्धारितः[१]।

गुणैः संदिग्धजातिपरीक्षणञ्च मनुनाऽप्युक्तम् :—

पित्र्यं वा भजते शीलं मातुर्वोभयमेव वा।
न कथंचन दुर्योनिः प्रकृतिं स्वां नियच्छति[२]॥

किञ्च अब्राह्मणे न हि ब्रह्म ध्रुवं तिष्ठेत् कदाचन[३]।

अत्र पद्ये ब्राह्मणे वेदस्थित्यभावः स्पष्टमेवोक्तः। ततश्च न शूद्राणां वेदाध्ययनेन ब्राह्मणत्वम्। योनिसंकरे सत्येव इतरगुणा इतरत्र दृश्यन्ते नान्यथेति मनुनाप्युक्तम्।

कुले मुख्येऽपि जातस्य यस्य स्यात् योनिसंकरः।
संश्रयत्येव तच्छीलं नरोऽल्पमपि वा बहु[४]॥

इममेवार्थं युधिष्ठिरोऽग्रे स्पष्टमाह :—

सर्वे सर्वास्वपत्यानि जनयन्ति सदा नराः।
वाङ्मैथुनमथो जन्ममरणं च समं नृणाम्[५]॥
इदमार्षं प्रमाणञ्च ये यजामह इत्यपि।
तस्मात् शीलं प्रधानेष्टं विदुर्ये तत्त्वदर्शिनः[६]॥

आभ्यां पद्याभ्यां जातिसंशये शीलस्यैव जातिनिर्णायकेषु प्राधान्यमुक्तम्। अतो जन्मनैव जातिव्यवस्था सिद्धा।

अतएव मनुनाप्युक्तम् :—

यादृशं भजते हि स्त्री सुतं सूते तथाविधम्।
तस्मात् प्रजाविशुद्ध्यर्थं स्त्रियं रक्षेत्प्रयत्नतः[७]॥

---

१. ( महा० अनु० २७।१७ ) ॥ इति ॥
२. ( मनुस्मृति १०।५९ ) ॥ इति ॥
३. ( महा० शान्ति० ३।३१ ) ॥ इति ॥
४. ( मनु० १०.६० ) ॥ इति ॥
५. महा० वन० १८०।३२ ) ॥ इति ॥
६. ( महा० वन० १८०।३३ ) ॥ इति ॥
७. ( मनु० ९।९ ) ॥ इति ॥

यन्मे माता प्रलुलुभे विचरन्त्यऽपतिव्रता।
तन्मे रेतः पिता वृङ्क्तां श्रुतिरत्र निदर्शनमिति[1] ॥

मैत्रायणी संहितायामपि: —

न वै तद् विद्म यदि ब्राह्मणा वा स्मोऽब्राह्मणा वा[2]।

अतः स्पष्टं प्रतीयते—वर्णसंकरशंकायां जातिनिर्णयार्थं गुणकर्मणी अपेक्ष्येते इति। अत एवाग्रे युष्ठिरवचनम् :—

कृतकृत्याः पुनर्वर्णा यदि वृत्तं न विद्यते।
संकरस्त्वत्र नागेन्द्र बलवान् प्रसमीक्षितः[3] ॥
यत्रेदानीं महासर्प संस्कृतं वृत्तमिष्यते।
तं ब्राह्मणमहं पूर्वमुक्तवान् भुजगोत्तम[4] ॥

आभ्यां पद्याभ्यामपि जातिसंशये वृत्तस्य तन्निर्णायकत्वमेवोच्यते। अतएवाग्रे सर्पो ब्राह्मणगुणानां पुरुषाणां साधकत्वेन प्राशंसत्।

ततो मे विस्मयो जातस्तद् दृष्ट्वा तपसो बलम्।
ब्रह्मं च ब्राह्मणत्वञ्च येन त्वाहमचूचुदम्[5]।
सत्यं दमस्तपोदानमहिंसा धर्मनित्यता।
साधकानि सदा पुंसां न जातिर्न कुलं नृप ॥

अतो नाभ्यां पद्याभ्यां गुणकर्मभ्यां जातिव्यवस्था सिध्यति। एकस्मात् परमात्मनो जातत्वाज्जातिभेदो न युक्त इत्यपि जातिभेदखण्डनमयुक्तमेव। तथा सति पश्वादीनामपि तज्जातत्वाज्जातिभेदाऽनापत्तेः। वस्तुतस्तु परमात्मनः सृष्टिः संकल्पप्रभवा न तु मैथुनसंभवा।

---

१. ( मनु० ६।२० ) ॥ इति ॥
२. ( कृष्ण यजुर्वेदे ) १।४।११।४७ ) ॥ इति ॥
३. ( महा० वनपर्व १८०।३६ ) ॥ इति ॥
४. ( महा० वनपर्व १८०।३७ ) ॥ इति ॥
५. ( महा० वनपर्व १८१।४२ ) ॥ इति ॥
६. ( महा० वनपर्व १८१।४३ ) ॥ इति ॥

अतएव संकल्पभेदेन जातिभेदः। अतएव तदा आद्यसर्गप्रजाऽपत्यानां परस्परं विवाहः रक्तभेदात् इति।

परमात्मनो भिन्नमुखादिरुपाङ्गजातत्वादपि जातिभेदः।

महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः[१]।

इत्यत्रापि च कर्मणा ब्राह्मणत्वजातिसिद्धिः समर्थ्यते। किन्तु ब्रह्मप्राप्तियोग्या तनुः क्रियत इत्येवार्थः। अन्यथा जातिविवक्षायां ब्राह्मणी इति स्यात्। ब्राह्मो जातौ[२] इति पाणिनिसूत्रात्।

सर्ववर्णेषु तुल्यासु पत्नीष्वक्षतयोनिषु।
आनुलोम्येन संभूता जात्या ज्ञेयास्त एव ते[३]॥

इति मनुपद्येऽपि जन्मनैव जातिरभिप्रेता।

ऋषभदेवस्य एकाशीतिः पुत्राः कर्मविशुद्धा ब्राह्मणा बभूवुः[४]।

अत्र क्षत्रिया गुणकर्मभ्यां ब्राह्मण्यमापुरिति केचिद् वदन्ति। तन्न। तेषु वर्ति विनाऽपि गुणकर्मभ्यां ब्राह्मणत्वातिदेशात्। अतएव तपःश्रुतं योनीनां ब्राह्मणत्वे प्रयोजकत्वमुक्तम्:—

तपः श्रुतं च योनिश्च एतद् ब्राह्मणकारकम्।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः[५]॥

अतः स्पष्टं प्रतीयते ब्राह्मणोचितगुणसमुदायहीनोऽपि जात्या ब्राह्मणो भवतीति। अतएव महाभाष्यकृतोक्तम्।

जातिहीनः संदेहाद् दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते॥ इति॥

---

१. (मनु० २।२८)॥ इति॥
२. (पा० सू० अ० ४।४ १७१)॥ इति॥
३. (मनुस्मृतिः १० ५)॥ इति॥
४. (भाग० ५ ४।१३)। इति।
५. (व्या महाभाष्यम् अ० ५, पा० १, आ० २ तेन तुल्यं क्रियाचेद्वति सूत्रे ५।१।११५)॥ इति॥

अतएव प्रागुक्ते भागवतवाक्ये कर्मविशुद्धा इति ब्राह्मणत्वातिदेश-प्रयोजकमुक्तम्। तस्मान्न गोश्ववज्जातिभेदोऽस्ति देहिनाम्[1]। इत्यस्यापि न जातिभेदनिषेधकत्वम्। मनुष्यावान्तरजातिभेदो न गवादिवदाकृति-व्यङ्ग्यः किन्तु सकृदाख्यातनिर्ग्राह्य एवेत्यत्रास्य तात्पर्यात्। मनुष्येषु मनुष्यत्वजातिराकृतिग्राह्या।

अतएव तत्र समानप्रसवात्मिका जातिरिति लक्षणं घटते। आकृति-ग्रहणा जातिरित्यपि तदर्थकमेव।

एभिस्तु कर्मभिर्देवि ! शुभैराचरितैस्तथा।
शूद्रो ब्राह्मणतां याति वैश्यः क्षत्रियतां तथा[2]॥

अत्र पद्ये ब्राह्मणतामित्यस्य ब्राह्मणवत् सत्कार्यताऽर्थः। एवं क्षत्रियता पदेऽपि। अन्यथा तत्र शूद्रवैश्यपदयोः प्रयोगो विरुध्यते। किञ्च जन्मान्तरे ब्राह्मणत्वादिप्राप्तिरत्राभिप्रेता इति न दोषः। यतस्तत्रैवोक्तम् :—

एते योनिफला देवि स्थानभागनिदर्शकाः[3]।
शूद्रोऽप्यागमसंपन्नो द्विजो भवति संस्कृतः।
एतैः कर्मफलैर्देवि न्यूनजातिकुलोद्भवः[4]॥

इति पद्यादपि न कर्मणा जात्यन्तर प्राप्तिर्वर्तमानजन्मनि सिध्यति। एतस्य पद्यस्य कर्मणा जन्मान्तरे जात्यन्तरप्राप्तिपरत्वात्।

अन्यथाऽपशूद्राधिकरणे शूद्रस्य वेदाध्ययन - निषेध - निर्णयात्कथं वर्तमानजन्मनि आगमसंपन्नत्वं द्विजत्वं संस्कृतत्वं च स्यात्। तस्मादे-तज्जन्मानुष्ठितैः स्वजात्युचितकर्मभिर्जन्मान्तरे एतत् त्रितयं भवति इति लभ्यते।

---

१. ( भविष्य० ब्राह्म० ४०।३४ )॥ इति॥
२. ( महा० अनुशा० १४३।२६ )॥ इति॥
३. ( महा० अनु० १४३।५३ )॥ इति॥
४. ( महा० अनु० १४३।४६ )॥ इति॥

शूद्रयोनौ हि जातस्य सद्गुणानुपतिष्ठतः ।
वैश्यत्वं लभ्यते ब्रह्मन् क्षत्रियत्वं तथैव च ।
आर्जवे वर्तमानस्य ब्राह्मण्यमभिजायते[1] ॥

एतद्वाक्यकदम्बकमपि गुणकर्मभ्यां जन्मान्तरे जात्यन्तरप्राप्तिपरम् । तथा हि अनुशासनपर्वणि इन्द्रमतङ्गसंवादे स्मर्यते :—

तिर्यग् योनिगतः सर्वो मानुष्यं यदि गच्छति ।
स जायते पुल्कसो वा चांण्डालो वाऽप्यसंशयम्[2] ॥
पुल्कसः पापयोनिर्वा यः कश्चिदिह लक्ष्यते ।
स तस्यामेव सुचिरं मतङ्ग ! परिवर्तते[3] ॥
ततो दशशते काले लभते शूद्रतामपि ।
शूद्रयोनावपि ततो बहुशः परिवर्तते[4] ॥
ततस्त्रिंशद्गुणे काले लभते वैश्यतामपि ।
वैश्यतायां चिरं कालं तत्रैव परिवर्तते[6] ॥
ततः षष्ठिगुणे काले लभते ब्रह्मबन्धुताम्[5] ।
यस्तु शूद्रो दमे सत्ये धर्मे च सततोत्थितः ।
तं ब्राह्मणमहं मन्ये वृत्तेन हि भवेद् द्विजः[7] ॥

इति पद्यमपि गुणकर्मभ्यां वर्णव्यवस्थां न साधयति । तत्र व्रतविनाऽपि वृत्तेन ब्राह्मणत्वारोपात् । इतः पूर्वस्मिन् पद्ये :—

ब्राह्मणः पतनीयेषु वर्तमानो विकर्मसु ।
दाम्भिको दुष्कृतः प्राज्ञः शूद्रेण सदृशो भवेत्[8] ॥

---

१. ( महा० तनपर्व २।२।११ ) ॥ इति ॥
२. ( महा० २८।६ ) ॥ इति ॥
३. ( महा० २८।७ ) ॥ इति ॥
४. ( महा० २८।८ ) ॥ इति ॥
५. ( महा० २८।९ ) ॥ इति ॥
६. ( महा० २८।१० ) ॥ इति ॥
७. ( महा० वनपर्व २।६।१४ ) ॥ इति ॥
८. ( महा० वनपर्व २।६।१३ ) ॥ इति ॥

शूद्रेण सदृश इत्युक्तेः। अतोऽत्र ब्राह्मणसदृशमित्येवार्थः। किञ्च यस्तु शूद्रो दमे सत्ये इत्यादि पद्ये वर्तमानजन्मनि ब्राह्मणजन्मान्तरे भाविधर्मव्याधं उक्तं महाभारते तत्रैव च जन्मान्तरे एव तस्य जातिपरिवर्तनं स्मर्यते तद् यथा।—

व्याधस्त्वं भविता क्रूर शूद्रयोनाविति द्विजः[1]।
शूद्रयोन्यां वर्तमानो धर्मज्ञो हि भविष्यसि[2]॥
जातिस्मरस्त्वं भविता स्वर्गञ्चैव गमिष्यसि[3]।
शापक्षये तु निर्वृत्ते भविताऽपि पुनर्द्विजः[4]॥
एतत्ते सर्वमाख्यातं यथा मम पुराऽभवत्।
अभितश्चाति गन्तव्यं मया स्वर्गं द्विजोत्तम[5]॥

अत्र मरणान्तरमेव ब्राह्मणस्य शूद्रवर्णप्राप्तिरिति।

जात्या न क्षत्रियः प्रोक्तः क्षतात् त्राणं करोति यः।
चातुर्वर्ण्यबहिष्ठोऽपि स एव क्षत्रियः स्मृतः॥
न योनिर्नापि संस्कारो न श्रुतं न च संततिः।
कारणानि द्विजत्वस्य वृत्तमेव तु कारणम्[6]॥
न कुलेन न जात्या वा द्वाभ्यां वा ब्राह्मणो न हि।
चाण्डालोऽपि व्रतस्थश्चेद् ब्राह्मणः स युधिष्ठिर॥
सर्वेऽपि योनिजा मर्त्याः समांसाः सपुरीषकाः।
न जातिर्दृश्यते तावद् गुणाः कल्याणकारकाः[7]॥

अत्र प्रथमे पद्ये चातुर्वर्ण्यबहिष्ठोऽपि क्षत्रिय इति नोपपद्यते। क्षत्रियस्य चातुर्वर्ण्यान्तर्गतत्वात्। अतस्तत्र क्षत्रियगुणं दृष्ट्वा क्षत्रिय-

---

१. ( महा९ २।५।३१ )॥ इति॥
२. ( महा० २।६।४ )॥ इति॥
३. ( महा० २।६।५ )॥ इति॥
४. ( महा० २।६।६ )॥ इति।
५. ( महा० २।६।८।९ )॥ इति॥
६. ( महा० वन० ३१३ )॥ इति॥
७. ( महा० अनुशासन पर्व० )॥ इति॥

त्वारोपो बोध्यः। द्वितीये पद्येऽपि व्रतस्य प्रशंसापरोऽर्थवादः। अन्यत्र योन्यादीनां द्विजत्वे कारणत्वोक्तेः। तृतीये पद्ये पि व्रतस्य प्रशंसापरोऽर्थवादः। अन्यथा चाण्डालत्वब्राह्मणत्वयोः परस्परं विरोधात्सामानाधिकरण्यं नोपपद्यते। किञ्चात्र अपिः सम्भावनायाम् व्रतस्थस्य चाण्डालस्यापि ब्राह्मण्यं संभावितमिति। सम्भावनाविषयश्चार्थोऽतथ्य इति प्रसिद्धमेव।

चतुर्थे पद्ये जातेरभिव्यञ्जकं विना दृश्यत्वेन गुणानां कल्याणकारकत्वमुक्तम्। न त्वत्र गुणैर्जात्यन्तरप्राप्तिरुक्ता इति।

वैश्यकर्म च यो विप्रो लोभमोहव्यपाश्रयः।
ब्राह्मण्यं दुर्लभं प्राप्य करोत्यल्पमतिः सदा॥
स द्विजो वैश्यतामेति वैश्यो वा शूद्रतामियात्।
स्वधर्मात्प्रच्युतो विप्रस्ततः शूद्रत्वमाप्नुयात्[1]॥

इदञ्च वचनं ब्राह्मणस्यात्र जन्मनि वैश्यकर्मकुर्वतो जन्मान्तरे वैश्यत्वप्राप्तिपरम्। इतः पूर्वपद्यावलोकनेन तथा प्रतीतेः। तथा हि—

यश्च विप्रत्वमुत्सृज्य क्षत्रधर्मान्निषेवते।
ब्राह्मण्यात्स परिभ्रष्टः क्षत्रयोनौ प्रजायते[2]॥इति॥

अत्र ब्रह्मपुराणे एवमुक्तम्:—

ब्राह्मण्यं देवि! दुष्प्राप्यं निसर्गाद् ब्राह्मणः शुभः।
क्षत्रियो वैश्यशूद्रौ च निसर्गादिति मे मतिः॥

अत्र निसर्गादित्युक्त्या स्वाभाविकमेव जन्मकृतं ब्राह्मणत्वादिकं न तु गुणकर्मकृतमिति स्पष्टमेवोक्तम्।

भृगोर्वचनमात्रेण स च ब्रह्मर्षितां गतः।
वीतहव्यो महाराज ब्रह्मवादित्वमेव च[3]॥

---

१. ( ब्रह्म पुराणे २२३।१६।१७ )॥ इति॥
२. ( ब्रह्म पुराणे २२३।१५ )॥ इति॥
३. ( महा० अनु० ३०।५७ )॥ इति॥

अत्रापि ब्रह्मर्षितां गतः, ब्रह्मर्षिपदव्यपदेश्यतां गत इति अर्थः। भृगोर्वचनात्तत्र ब्रह्मर्षित्वारोपः। नेहास्ति क्षत्रियः कश्चित्सर्वे हीमे द्विजातयः इति हि भृगोर्वाक्यम्।

न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत्।
ब्रह्मणा निर्मितं तत्तु कर्मभिर्वर्णतां गतम्[1] ॥

अनेनापि पद्येन न कर्मभिर्वर्णव्यवस्था सिध्यति। यत् ब्रह्मणा निर्मितं तत्तु विशेषरहितं जातम्। पश्चात्तु कर्मभिर्वर्णतां भिन्नवर्णतां गतम्। तदुक्तं भिन्नवर्णजातानां तु जात्यैव जन्मव्यवस्था।

सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः।

महाभारते शान्तिपर्वणि :—

कामभोगप्रियास्तीक्ष्णाः क्रोधनां प्रियसाहसाः।
त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः[2] ॥
गोभ्यो वृत्तिं समास्थाय पीताः कृष्युपजीविनः।
स्वधर्मान्नानुतिष्ठान्त ते द्विजा वैश्यतां गता[3] ॥
हिंसानृतप्रियालुब्धाः सर्वकर्मोपजीविनः ॥
कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रतां गताः[4] ॥
इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः[5] ॥

इत्येतानि पद्यान्यपि कर्मभिर्जन्मान्तरे वर्णान्तरप्राप्तिपराणि न त्वत्रैव जन्मनि जन्मना जातिव्यवस्थापकप्रागुक्तमन्वादिवचनविरोधात्। कर्मणा जन्मान्तर एव फलप्राप्तिश्रवणाच्च।

---

१. ( महा० शान्ति० १८८।१० ) ॥ इति ॥
२. ( महा० भा० शान्ति पर्व० १८८।११ ) ॥ इति ॥
३. ( महा० शा० प० १८८।१२ ) ॥ इति ॥
४. ( महा० शा० प० १८८।१३ ) ॥ इति ॥
५. ( महा० शा० प० १८८।१४ ) ॥ इति ॥

यत्तु शुक्रनीतिवचनम् :—

न जात्या ब्रह्मणश्चात्र क्षत्रियो वैश्य एव च।
न शूद्रो न न वै म्लेच्छो भेदिता गुणकर्मभिः[1] ॥
ब्रह्मणस्तु समुत्पन्नाः सर्वे ते किं नु ब्राह्मणाः।
न वर्णतो न जनकाद् ब्राह्मं तेजः प्रपद्यते[2] ॥

एतत्पद्याभ्यामपि न गुणकर्मभ्यां वर्णव्यवस्था सिध्यति। तथा हि - जात्या ब्राह्मणादयो न भेदिताः, जातेरदृश्यत्वात्, किन्तु गुणकर्मभिस्ते भेदिताः गुणकर्मणां प्रत्यक्षत्वात् इति प्रथमपद्यार्थः। वर्णतः जातितः जनकाद्वा ब्राह्मं तेजो न प्रपद्यते किन्तु गुणकर्मभ्यां प्रपद्यते। जात्या ब्राह्मणस्यापि ब्राह्मणपुत्रस्यापि गुणकर्मराहित्ये ब्रह्मतेजसोभावात् इति द्वितीयपद्यार्थः। एवञ्च नैताभ्यां पद्याभ्यां जन्मना जातिव्यवस्थाविरुद्धं किमपि उच्यते।

मानवशब्दो मानवत्वजातिवाची मनोरपत्येषु योगरूढः। मनुराज्य—प्रजासु तु तैलादिशब्दवन्निरूढलक्षणया प्रयुज्यते। एवञ्च तत्र मानवत्वस्यारोप एव बोध्यः।

यथा सार्षपे स्नेहे तैलत्वस्यारोपः। यो ब्राह्मण ईसाईधर्मं मुस्लिमधर्मं वा परिगृह्णाति तस्य ब्राह्मणत्वजातिर्जन्मसिद्धा न नश्यति किन्तु तत्र व्रात्यता कर्मानर्हता व्यवहार्यता चाऽगच्छति।

अत एवायं ब्राह्मण ईसाई इति अयं ब्राह्मणो मुसलमान इति व्यवहारे तत्रापि ब्राह्मणपदं प्रयुज्यत एव। एवं सवर्णेभ्यः सवर्णासु जातस्य जन्मना जातिः सिद्धः। योनिसङ्करेतु मातृजातिरेव धर्मशास्त्रेषु व्यवस्थापिताऽभ्युपेया। किञ्चैतज्जन्मानुष्ठितसत्यदानदया-दाक्षिण्यादिभिः सुकृतैरितरैर्वा परजन्मनि तत्तज्जातिप्राप्तिः। पूर्वजन्म-कर्मभिश्चैतज्जन्मनि तत्तज्जातिप्राप्तिरिति ध्येयम्।

---

१. ( शुक्रनीति १।३८ ) ॥ इति ॥
२. ( शुक्रनीति १।३९ ) ॥ इति ॥

किञ्च भाविनाऽपि धर्मेण व्यपदेशो दृश्यते। अस्य सूत्रस्य पटं वय, अनयोः पूलयोः कटं कुरु इति। अत्र हि यो वातव्यः कर्तव्यो वा नासौ पटः कटो वा तेन विज्ञायते मन्ये स वातव्यः कर्तव्यो वायस्योतस्य कृतस्य वा पट इति कट इति वा संज्ञा भाविनीति।

एवमेव सर्वेषु विश्वामित्र - वीतहव्य - ऋषभ - पुत्रादिषु क्षत्रियेषु वर्तमानजन्मनि ब्राह्मणोचितकर्मभिर्भाविब्राह्मण्यव्यपदेशो घटते इत्यवधेयम्।

---

## २—जातिर्नित्याऽनित्या वा

जातिर्नित्यपदार्थगताऽनित्यपदार्थगता वा नित्यैव। अनित्यत्वे प्रागभावप्रध्वंसाद्यभावकल्पनायामनन्तजातिकल्पनायाञ्च गौरवात्। एकत्वे तत्प्रयुक्ते नित्यत्वे च लाघवात्। कालत्रयेऽपि एकाकारप्रत्ययगोचरत्वेन नित्यत्वसम्भवाच्च। एवञ्च जातिस्तदा कौरभिर्व्यज्यत एव, न तु क्रियते। जातिपदव्युत्पत्तिश्च जननेन "जन्मना" प्राप्यते "स्वाश्रये संबध्यते" इति जातिरिति।

अत्रप्रकृतिभूतस्य "जन्" धातोर्जन्महेतुकः प्राप्तिलक्षणोऽर्थः। कृत्यल्युटो[1] बहुलमिति योगविभागेन बाहुलाकात्कर्मणि क्तिन्। एवञ्च जातेर्नित्यत्वाभ्युपगमे न जातिपदव्युत्पतिविरोध इति॥

---

१. (पा० अ० अ० ३, पा० ३, सू० ११३)॥ इति॥

## ३—न्यायादि नये पदवाक्ययोर्जातिरस्ति न वा

तत्र गौतमीयोलूक्यदर्शनयोस्तु वर्णानां क्षणद्वयावस्थायित्व प्रयुक्तेनाऽयौगपद्येन नास्ति वर्णसमूहरूपं पदमत एव नास्ति पदसमूहरूपं वाक्यम् इति[१]। आश्रयाभावे पदत्वावाक्यत्वजात्योः कुतः सम्भवस्तथापि तयोर्मते पूर्वंपूर्ववर्णानुभवजनितसंस्कारसहकृतं प्रत्यक्ष-गोचरं वर्ण[२] एव पदस्मारकः पूर्वंपूर्वंपदानुभवजनितसंस्कारसहकृत-प्रत्यक्षगोचरीभूतं पदमेव वाक्यस्मारकमिति तत्रास्ति पदत्ववाक्यत्व-जातिसम्भवः। किन्तु घकारोत्तरत्वविशिष्टाकरोतरत्व विशिष्ट-टककारोतरत्वविशिष्टाकारत्वरूपया आनुपूर्व्यैव सखण्डोपाधिभूतया सर्वव्यवहारोपपत्तिरेतयोर्मते शक्तं पदम्, पदसमूहो वाक्यमित्यादि-व्यवहारा[३] अपि उक्तानुपूर्व्यैव साधनीयाः। कोषेऽपि[४] च सर्वसम्मते "सुप्तिङन्तचयो वाक्यम् क्रिया वा कारकान्विता" इति वाक्यलक्षण-मुपलभ्यते। पदं पदमिति वाक्यं वाक्यमिति अनुगतः प्रत्यक्षप्रत्ययोऽपि अबाधितस्तयोर्जातिसाधकः समुपलभ्यत एव। ये तु मीमांसका वर्णनित्यत्ववादिनो ये च व्यवहारे भाट्टनय इति वदन्तो वेदान्तिन आकल्पं चन्द्रार्कादिवद् वर्णस्थायित्ववादिनस्तेषां मते तु वर्णयौगपद्य-सम्भवेन उक्तलक्षणयोः पदवाक्ययोः संभवादस्त्येव पदत्ववाक्यत्व-जातिसम्भवः।

अतएव ब्रह्मसूत्रशाङ्करभाष्ये वर्णा एव पदम् इति भगवानुपवर्ष इति श्रीशङ्कराचार्यः सश्लाघ्यमुदाजहार[६]। न च परमततया प्रत्य-

---

१. ( न्या० सि० मु० प्र० ख० का० २७ )॥ इति॥
२. ( न्या० सि० मु० श० ख० का० ८२ )॥ इति॥
३. ( न्या० सि० मु० श० ख० का० ८१ )॥ इति॥
४. ( न्या० द० अ० २, आ० १, सू० ५६ )॥ इति॥
५. ( अ० को० का० १, व० ६, श्लो० २ )॥ इति॥
६. ( ब्र० सू० शा० भा० अ० १, पा० ३, अ० ८, सू० २८ )॥ इति॥

चख्यौ। सांख्ययोगिनश्च सत्कार्यवादिनो विश्वस्य सर्वदा सत्त्वं वदन्तो[1] वर्णनित्यत्वपदनित्यत्ववाक्यनित्यत्वपक्षपातिन एव। अत एवोक्तं गीतासु—

नासतो विद्यते भावो नाऽभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः[2] ॥ इति ॥

अत्र षड्विंशतिं पञ्चविंशतिं वा तत्त्वानि पश्यन्ति बुद्ध्या ते तत्त्वदर्शिनोऽभिप्रेताः सांख्ययोगयोरेकत्वञ्चोक्तं गीतासु—

सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम्[3] ॥ इति ॥

शब्दार्थप्रत्यानामितरेतराध्यासात्तत्प्रविभागे संयमात् सर्वभूतरुतज्ञानमिति योगसूत्रभाष्ये[4] वैशारद्यञ्च शब्दस्वरूपमुखेन स्फोटवादः साधु समर्थितः[5] इति योगिनां मतेऽस्त्येव पदत्ववाक्यत्वजात्योरुपपत्तिः। नास्तिकदर्शनेषु अपि चतुर्षु सर्वभावानां क्षणभङ्गत्वादिषु न्यायवैशेषिकयोरिव उपपद्येते एव कथञ्चित्पदत्ववाक्यत्वजाती, अन्यापोहविशिष्टविधिरूपे।

जैना अपि अबाधितपदवाक्यव्यवहारान्यथाऽनुपपत्त्या पदवाक्ये अभ्युपगच्छन्तः स्वीकुर्वते एव तद्गते पदत्ववाक्यत्वकजाती सर्वेषां भावानां सत्त्वभङ्गी नयेन कथञ्चित्सत्वासत्वोभयवादिनः। तथा चाहुः—

सत्ता सर्वपदार्था सविश्वरूपा अनन्तपर्याया।
सङ्गोत्पादध्रौव्यात्मिका सप्रतिपक्षा भवत्येका[6] ॥ इति ॥

---

१. ( सां० प्र० भा० प० अ० सू० ५९-६० पृ० सं० २२९-२३० ) ॥ इति ॥
२. ( भ० गी० अ० २, श्लो० १६ ) ॥ इति ॥
३. ( भ० गी० अ० ५, श्लो० ४ ) ॥ इति ॥
४. ( पा० यो० द० तृ० पा० ३, सू० १७, पृ० सं० १२० ) ॥ इति ॥
५. ( पा० यो० सू० वै० अ० १, पा० तृ सू० स० १७, वै० टी० १२१–१२७ ) ॥ इति ॥
६. ( पञ्चास्तिकायः गा० ८ ) ॥ इति ॥

वैयाकरणास्तु अष्टस्फोटीमभ्युपयन्तः पदवाक्ययोः पदत्ववाक्यत्व-जाती वाचिके स्फोटरूपेवाचकपदवाक्यस्फोटाश्रिते वा अवैमत्येनोररीकुर्वन्ति[१] ।

तदेवं प्रायः सर्वदर्शनराद्धान्तसिद्धे पदवाक्यगते पदत्ववाक्यत्वजाती नाऽपह्नवमर्हतः । ऋते चार्वाकदर्शनम् । तन्मते हि भूतचतुष्टयातिरिक्तानां पदार्थानां सत्त्वानभ्युपगमात्[२] ।।

———

## ४. अथ विज्ञानवादिमतेन जातिपदार्थव्यवस्था :—

एषा च दर्शिता वाक्यपदीये :—

अनुप्रवृत्तिरूपां यां प्रख्यातामाकृतिं विदुः ।
केचिद्व्यावृत्तिरूपां तु द्रव्यत्वेन प्रचक्षते[३] ।।

अयं भावः । घटोऽयम्, घटोऽयम्, इत्यनुगताकारा या बुद्धिस्तस्यां प्रतिभासमानस्तदाकारोऽर्थरूपतयाऽऽवसीयमानः ( गृह्यमाणः ) एकत्वेन दृश्यस्य घटत्वस्य विकल्पप्रत्ययस्य चाभेदाऽध्यवसायाद् विकल्पात्मकमन्यापोहविशिष्टं घटत्वरूपं सामान्यमित्याहुः । घटोऽयम्, पटोऽयम्, इत्यादिरूपव्यावृत्ताकरबुद्धिसन्निवेशित्वाकारोऽत्र दर्शने द्रव्यमिति । एवञ्च वाह्यस्य सामान्यस्याभावादाकाशादावपि तत्समर्थने न प्रयतितव्यम् । अभिन्नाकार प्रत्ययस्य चाऽपह्नवनीयत्वाद् विज्ञानवादिमते च च सर्वस्यापि पदार्थस्य प्रत्ययात्मकत्वात् सामान्याकरवती बुद्धिरुत्पद्येत इत्याकर एव जातिरूपः शब्दार्थो न बुद्धिः । स ह्याकारो वाह्योऽस्तु न वा तस्य शब्दवाच्यत्वे न काचित्क्षतिरिति[४] ।।

———

१. ( वै० भू० सा० स्फो० नि० का० १ ) ।। इति ।।
२. ( "तत्रपृथिव्यादीनि भूतानि चत्वारि तत्त्वानि" सर्वदर्श० सं० चा० द० ) ।। इति ।।
३. ( वा० प० तृ० का० जा० स० ३।१।१६ ) ।। इति ।।
४. ( वा० [illegible] ) ।। इति ।।

## ५. जात्यादिपदार्थानामेकत्वं नानात्वं वा—

ननु वस्तूनां देशकालादिभेदनिमित्तको भेदं इति तदनादरे भिन्नान्येव तानि सिद्धानीति किमर्थं भिन्नानां व्यक्तीनामनुगमाय व्यक्त्यतिरिक्तसामान्यकल्पनायां प्रपद्यते इति चेदेतदपि समाहितं वाक्यपदीये—

भिन्ना इति परोपाधिरभिन्ना इति वा पुनः।
भावात्मसु प्रपञ्चोऽयं संसृष्टेष्वेव जायते[१]॥

अयं भावः। निरुपाधिकस्य वस्तुनो ब्रह्मरूपस्य सर्वव्यवहारगोचरत्वाद् भिन्नाः पदार्थाः अभिन्नाः पदार्थाः इति सर्वोऽप्ययं व्यवहारः कल्पितपरोपाध्याश्रित एवेति घटादौ घटत्वादिरूपा घटत्वादौ च जातित्वरूपा जातिकल्पना सर्वत्रैव कृता एतदेव व्यतिरेकमुखेणापि दर्शितं वाक्यपदीये[२]—

नैकत्वं नापि नानात्वं न सत्वं न च नास्तिता।
आत्मतत्त्वेषु भावानामसंसृष्टेषु विद्यते[३]।

अयं भावः। भावानामेकत्वसंख्यौपाधिकत्वएकत्वेन व्यवहारः। पृथक्त्वनिबन्धनो नानात्वेन व्यवहारः सत्तानिबन्धनः सत्त्वेन व्यवहारः, भावानां स्वरूपसत्त्वेन तु तत्र सामान्यादीनामभावे औपाधिको नास्ति इति व्यवहारः इति परोपाधिसंसर्गनिमित्तक एवायं सर्वोऽपि भावानां व्यवहारप्रपञ्चः।

भावानां विभिन्ना स्व शक्तय एव सर्वत्र व्यवहारे उपाध इत्यद्वैत दर्शनाश्रयेणापि व्यवहारवैचित्र्यं समाहितं वाक्यपदीये :—

---

१. ( वा० अ० तृ० का० जा० स० ३।१।२० ) ॥ इति ॥
२. ( वा० प० तृ० का० जा० स० हे० रा० टी० ३।१।२० ) ॥ इति ।
३. ( वा० प० तृ० का० जा० स० ३।१।२१ ) ॥ इति ॥

सर्वशक्त्यात्मभूतत्वमेकस्यैवेति निर्णयः[१]।
भावानामात्मभेदस्य कल्पना स्यादनर्थिका[२]॥

अयं भावः। एकमेव ब्रह्मसर्वंशक्तिकमिति उपनिषदादिप्रमाणेन सिद्धे स्मिन्नर्थे विद्यापरिकल्पितस्य भावभेदस्यापारमार्थिकत्वात् कार्यनानात्वेनोन्नस्यमान एकस्य ब्रह्मरूपस्य वस्तुनः शक्तिभेद एव युक्तो न तु भावानां स्वरूपभेदः[३]। एवञ्चैकस्य वस्तुनो द्रव्यादिरूपा विलक्षणाः शक्तयः संसृष्टा एव भोगरूपस्य पुरुषार्थस्य साधिका न तु केवला इत्यप्युक्तं वाक्यपदीये :—

तस्माद् द्रव्यादयः सर्वाः शक्यो भिन्नलक्षणाः।
संसृष्टाः पुरुषार्थस्य साधिका न तु केवलाः[४]॥

अयं भावः। द्रव्यगुणकर्मसामान्यविशेषसमवायलक्षणाः पदार्था न पृथग्भूताः, किन्तु एकस्यैव वस्तुनो ब्रह्मरूपस्य विलक्षणव्यापारानुमेया इति। यथा कार्यं परस्परमुपगतसंबन्धाः प्रापणाद्यर्थक्रियाकारिण्य इत्यस्मिन्मते सर्वत्रैव जातिव्यक्तिप्रविभागः कल्पितः इति नाकाशादीपमपि नित्यत्वेनाभिमतानां घटादिभ्योऽनित्येभ्यः किञ्चिद् विशेषः।

यथा हि वैशेषिकाणां द्रव्यादिव्यतिरिक्तसामान्यम् न तथेह दर्शने किन्तु केवलं विश्वमूर्तेर्ब्रह्मरूपस्यैकस्य पदार्थस्य शक्तिमात्रं तत्। न केवलं सामान्यमेवैवं भूतम्, किन्तु द्रव्यादयोऽपीति। द्रव्यादीनां पदार्थानां वास्तवभेदाभ्युपगमेऽपि संसृष्टानामेवार्थक्रियाकारित्वं न केवलानामिति वरमेकमेव शक्तिमवस्तु इति[५]।

---

१. ( वा० प० तृ० का० जा० स० हे० रा० टी० ३।१।२१ ) ॥ इति ॥
२. ( वा० प० तृ० का० जा० स० ३।१।२२ ) ॥ इति ॥
३. ( वा० प० तृ० का० जा० स० हे० रा० टी० ३।१।२२ ) ॥ इति ॥
४. ( वा० प० तृ० का० जा० स० ३।१।२३ ) ॥ इति ॥
५. ( वा० प० तृ० का० जा० स० हे० रा० टी० ३।१।२३ ) ॥ इति ॥

## ६—जातिः पदार्थो द्रव्यं वा उभयं वा विशिष्टं वा

पदार्थविचारावसरे वाक्यपदीये तृतीये काण्डे जातिसमुद्देशे उक्तम् :—

पदार्थानामपोद्धारे जातिर्वा द्रव्यमेव वा।
पदार्थौ सर्वशब्दानां नित्यावेवोपवर्णितो[1] ॥इति॥

अस्यार्थः —वाक्यार्थात् पदार्थानामपोद्धारे सर्वशब्दानां जातिरेव नित्यपदार्थं इति केचित्[2]। केचित्तु नित्यं द्रव्यं ब्रह्मैव सर्वशब्दानामर्थं इति[3]। केचित्तु नित्यावुभावेव पदार्थो सर्वशब्दानाम् मिलितो पृथग् वा इत्याहुः[4]। तत्राद्यं बाजप्यायनाचार्यं मतम्[5]। तथा हि सर्वेषामपि शब्दानां पदरूपाणां नामाख्यातोपसर्गनिपातस्वभावानां जातिवादिमते जातिरेवार्थो न द्रव्यम्।

तत्र गौरित्यादेर्नामपदस्य सर्वासां गोव्यक्तीनां सामान्यभूताऽपि गोत्वादिजातिरानयनबन्धनदोहनादिरूपनियतक्रियाविषयकर्मत्वादिरूप - कारकशक्त्या सहैकार्थसमवेतैकत्वादिसंख्याजातिविशेषभावमापादिताऽऽभिधेया। द्रव्यं तु पदेनानभिधीयमानमपि अनाश्रयां या जातेरनुपपत्तेः सामर्थ्यात्प्रतीतं भवति[6]।

एवमाख्यातपदस्यापि परस्परं भिन्नासु क्षणिकासु उत्क्षेपणापक्षेपणादिषु तत्तद्धात्वर्थक्रियासु समवेता तासां क्रिया व्यक्तीनामभिन्नाभिधानप्रत्ययहेतुः क्रियात्वसामान्यव्याप्या उत्क्षेपणात्वादिजातिः साक्षाद् वाच्या। कर्मत्वकारणत्वादिरूपा कारकाजातिस्तु अत्र ( क्रियाजातिषु

---

१. ( वा० प० तृ० का० स० ३।१।१२ ) ॥ इति ॥
२. ( वै० भू० सा० ना० नि० प्र० का० १ ) ॥ इति ॥
३. ( वै० भू० सा० ना० नि० प्र० का० १ ) ॥ इति ॥
४. ( वै० भू० सा० ना० नि० प्र० का० १ ) ॥ इति ॥
५. ( 'सरूपाणामेक शेष एक विभक्तौ'' सूत्रस्य भाष्यम् अ० १, पा० २, आ० ३, सू० ६४ ) ॥ इति ॥
६. ( वा० प० तृ० का० जा० स० हे० रा० टी० ३।१।२ ) ॥ इति ॥

तत्तद्धात्वर्थभूतासु ) गुणभूता । चतुष्कं पञ्चकं वा प्रातिपदिकार्थ इति मते वाच्यवाचकभावसम्बन्धेन नामपदगतया कर्मत्वादिरूपया कारकजात्या सह तेनैव सम्बन्धेन आख्यातपदगता क्रिया जातिः स्वाश्रयव्यक्ति द्वारीकृत्य समन्वयमनुभवति । द्रव्यगता नामार्थभूता गोत्वादिजातिस्तु साधनशक्त्या कर्मत्वादि जातिरूपया सहैकस्मिन्नर्थे द्रव्यरूपे समवायात् उक्तरूपां साधनशक्ति द्वारीकृत्य क्रियायोगमेति । विभक्तिवाच्या संख्यागता जातिरपि स्वाश्रयव्यक्तिद्वारीकृता सहैकार्थसमवेता साधनशक्तिमुखेनैव क्रियाऽन्वयिनी इत्येवं सर्वपदार्थसमन्वयोपपत्तौ सत्यां वाक्यार्थः प्रसिद्ध्यति नान्यथा, साकाङ्क्षत्वात् । यथा च क्षणिकाभिरसमसमयभाविनीभिरपि उत्क्षेपणादिव्यक्तिभिरावर्तमानाभिरेव उत्क्षेपणत्वादिजातिरभिव्यज्यते ।

तथा क्षणिकाभिरधिश्रयणादिक्रियाव्यक्तिभिः पचत्यादिवाच्या पाकत्वादिरूपा क्रियागता जातिरभिव्यज्यते[1] । स्वाश्रयक्रिया व्यक्तीनां साध्यत्वेन च नित्याया अपि क्रिया जातेः साध्यत्वं शास्त्रे व्यवह्रियमाणमुपपद्येत । जातिपदार्थवादे उपसर्गनिपातादिरपि नियमेन नामाख्यातसहभावी तत्तदर्थगतविशेषावद्योतकत्वाज्जातिपदार्थक एव । विशिष्टार्थविश्रान्तस्यैव विशेषस्य उपसर्गादिभिर्निश्चयप्रत्यायनात् ।

कर्मप्रवचनीयोऽपि स्वार्थमुखेन क्रियायोगमनुभवन् सम्बन्धविशेषगतजातिवाचक एव, न तु तदाश्रयसम्बन्धविशेषवाचकः । गुणशब्दानामपि शुक्लादिपदानां गुणत्वव्याप्यशुक्लत्वादिजातिरेव वाच्या ।

संज्ञाशब्दानामपि डित्थादिशब्दानामवस्थाभेदभिन्नव्यक्तिसमवेताऽभिन्नाभिधाप्रत्ययहेतुडित्थत्वादिजातिवाचित्वं समर्थितं वाक्यपदीये ।

ननु जातिरेव पदार्थ इत्यवधारणानुपपत्तिः तस्याः स्वाश्रयेषु समवायस्य वियोगात् । अत एव च स्वाश्रयकार्यसिद्धेः कारणानामासां प्रतिनियतेषु आश्रयेषु भाव इत्येवमाश्रयादुत्कर्षयितुमशक्या जातिः

---

१. ( वा० प० तृ० का० स० हे० रा० टी० ३।१।२ ) ॥ इति ॥

केवला कथं शब्देनाभिधीयते इति चेद् दृष्टान्तेनैतत्समाहितं वाक्यपदीये :—

यथा जलादिभिर्व्यक्तं मुखमेवाभिधीयते।
तथा द्रव्यैरभिव्यक्ता जातिरेवाभिधीयते[1] ॥इति॥

अयं भाव :—प्रतिबिम्बरूपं भावान्तरवज्रादर्शतलादिषु उपाधिषु समुत्पद्येत इति मतम्[2]।

विरुद्धपरिमाणेषु वज्रादर्शतलादिषु।
पर्वतादिसरूपाणां भावानां नास्ति संभवः[3] ॥

इत्येवं निराकृतम्, अतो यथा मुखादिप्रतिबिम्बमादर्शादौ भ्रान्त्याऽपि दृश्यमानमादर्शादिरूपव्यञ्जकरहितं शुद्धमेव मुखशब्दाभिधेयम्, एवं शब्दोऽपि जातिं व्यक्तिरहितामभिदधाति। अयं भावः—जातेराश्रय-समवायावियोगेऽपि तस्या अभेदेन लाघवात्तत्रैव शुद्धायां सर्वशब्दानां संकेत उपपद्यते न तु व्यक्तिरहितायाम्, व्यक्तेरानन्त्येन गौरवात्। शाब्दे ज्ञाते तथा प्रतीतौ बाधकाऽभावात्। ऐन्द्रियके तु ज्ञाने जातिव्यक्त्यो-र्विवेकाऽनवसायाद् भवतु तयोर्मिलितावभासः। शब्दस्य तु यथासंकेत-प्रतीतिहेतुत्वेन काचित् क्षतिरिति[4]।

ननु प्रागुक्तरीत्या शब्दादप्रतीयमाना व्यक्तयः। कथं शाब्दबोधे जातिविशेषतया प्रतीयन्ते इति चेत्? तर्हि—

इदमपि समाहितं वाक्यपदीये :—

यथेन्द्रियगतो भेद इन्द्रियग्रहणादृते।
इन्द्रियार्थेष्वदृष्टोऽपि ज्ञानभेदाय कल्पते[5] ॥

---

१. (वा० प० तृ० का० ज० स० ३।१।३९) ॥ इति ॥
१. (वा० प० तृ० का० जा० स० हे० रा० टी० ३।१।२९) ॥ इति ॥
३. (वा० प० ब्र० का० १।१००) ॥ इति ॥
४. (वा० प० बृ० का० हे० रा० टी० १।१००) ॥ इति ॥
५. (वा० प० तृ० का० स० ३।१।३०) ॥ इति ॥

तथाऽऽत्मरूपग्रहणात् केषांचित् व्यक्तयो विना।
सामान्यज्ञानभेदानामुपायान्ति निमित्तताम्[1]॥

शब्दादिपञ्चकोपलब्ध्यन्यथाऽनुपपत्या चक्षुरादीन्द्रियपञ्चकस्य सत्वमनुमीयते न तु प्रत्यक्षीक्रियते, नित्य परोक्षत्वादिन्द्रियाणाम्। एवञ्च यथाऽनुपलभ्यमानस्वगतचक्षुश्रोत्रादिविशेषाणि इन्द्रियाणि शब्दस्पर्शरूपरसगन्धेषु इन्द्रियार्थेषु चाक्षुषादिप्रत्ययविशेषहेतुभावं नियमेन प्रतिपद्यन्ते न हि चाक्षुषं ज्ञानं श्रोत्रेन्द्रियकार्यम् इति। एवमगृह्यमाण स्वभावा एव व्यक्तयः शब्देन जात्यभिधानवेलायां केषांचिदेव सामान्य-ज्ञानभेदानां काश्चनैव व्यक्तयः स्वविषयकप्रत्यक्षप्रत्ययानामिव हेतुता-मुपयान्ति।

शब्दार्थभूतानां सामान्यानां वस्तुतः स्वस्मिन् समवायनियमात् शाब्दे प्रत्यये संकेतमनुसृत्य कञ्चिदेव सामान्यविशेषमावेदयतीति न सांकर्यं शब्दार्थे शाब्दात्प्रत्ययात्पूर्वं शब्दवृत्या गृह्यमाणस्यापि भक्तिरूप-स्यान्यदा प्रत्यक्षकाले गृहीतत्वात्। शब्दे गृहीतसंकेतस्यापि तस्य जातिविषयकशाब्दप्रत्ययहेतुत्वे विरोधात्। दृष्टं हि संप्रत्यगृह्यमाण-स्यापि प्रतीतिविशेषहेतुत्वमिति। एतावता साम्येनात्रेन्द्रियाणि दृष्टान्तः तदेवं केवलं जात्यभिधानपक्षः समर्थितः[2]।

तदेवं वाजप्यायनाचार्यमतेन सार्वत्रिकी जातिपदार्थव्यवस्थोपपद्यते। व्याडिमते तु सर्वशब्दानां द्रव्यमर्थः तस्यैव साक्षात् क्रियायामन्वयोपपत्ते-र्वाक्यार्थाङ्गत्वेन विधिविषयत्वात्। द्रव्यस्य देशकालभेदेन नानात्वेऽपि तत्रैकजातिसम्बन्धवशेन शक्तिग्रहोपपत्तेः। क्रिया तु अत्र द्रव्ये गुणभूता व्यापारावेशवद्द्रव्यम् हि आख्यातोऽर्थः कर्तृरूपः। इदं तदिति सर्वनाम-प्रत्यावमर्शयोग्यं चात्र द्रव्यमिति सार्वत्रिकीयं व्यवस्था। तदुक्तं वाक्यपदीये—

---

१. ( वा० प० तृ० का० स० ३।१।३१ ) ॥ इति ॥
२. ( वा० प० तृ० का० स० हे० रा० टी० ३।१।३१ ) ॥ इति ॥

"द्रव्यधर्मापदार्थे तु द्रव्ये सर्वोऽर्थ उच्यते"[1] इति।

अस्यार्थः —द्रव्ये तु पदार्थे सर्वोऽर्थो गुणादिरूपोऽपि द्रव्यधर्मा लिङ्गसंख्याद्यन्वयित्वरूपद्रव्यधर्मवान् उच्यते इति। अतएव शुक्लादि-शब्दानामपि द्रव्यपदार्थकता सिद्धा। अथवा घटादिरूपतत्तदुपाधि-व्यावृत्तं ब्रह्म द्रव्यशब्दवाच्यम् सर्वशब्दानां विषयः। व्यक्तिपर्यायो वा द्रव्यशब्द इति जातिव्यक्तिविकल्पेन सर्वशब्दविषयः। प्रकृतिप्रत्यय-रूपस्यापि शब्दस्य यथायोगं क्रियाकारकसंख्यादिरपोद्धारपदार्थो जाति-व्यक्तिविकल्पेन समाम्नातः।

जातिव्यक्त्योरुभयोरपि शब्दात्प्रतीतेरुभयं पदार्थः। आर्थस्तु जातिद्रव्ययोर्गुणं प्रधानभावः[2]।

यद्वा प्राधान्येनैव भिन्नविषयतया पाणिनिदर्शने जातिः द्रव्य-शब्देनाभिधीयते इति मतविकल्पः। जातिद्रव्ययोरुभयोरपि नित्यत्वोप-वर्णनं "सिद्धे शब्दार्थसम्बन्धे" इत्यादि वार्तिकभाष्ये "यस्मिंस्तत्त्वं न विहन्यते" इति द्रव्यस्यापि नित्यत्वम्। द्रव्यस्यापि प्रवाहनित्यतया शब्दात्सदेव प्रतीतेः।

क्वचित्तु पञ्चकं प्रातिपदिकार्थं इति वैयाकरणैरभ्युपेतम् स्वार्थो जात्यादिरूपं प्रवृत्तिनिमित्तम्, द्रव्यं तदाश्रयः लिङ्गं पुंस्त्वस्त्रीत्वादिरूपम्, संख्या एकत्वादिपरार्धान्ता, कर्मादिरूपं कारकञ्चेति। तदुक्तम्—

एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा।
नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः[3] ॥ इति ॥

———

१. ( वा० प० तृ० का० स० ३ १।१३ ) ॥ इति ॥
२. ( वा० प० तृ० का० जा० स० हे० रा० टी० ३।१।१९ ) ॥ इति ॥
३. ( वै० भू० सा० ना० नि० प्र० का० १ ) ॥ इति ॥

## ७—जातिर्विभ्वी परिच्छिन्ना वा । विभुत्वे सर्वव्यक्तिसम्बद्धा स्वाश्रयव्यक्तिमात्रसंबद्धा वा ।

सर्वदेशसर्वकालस्वसंबन्ध्यार्हसर्वव्यक्तिसंबद्धत्वेन जातिर्विभ्वी एव, न तु देशतः कालतश्च परिच्छिन्ना । देशतः परिच्छेदे देशान्तरीय-व्यक्तिसंबन्धाभावप्रसङ्गः । कालतः परिच्छेदे चान्यकालिकव्यक्ति-संबन्धाभाव आपतीति । अनुभूयते च सर्वदेशात्रस्थितासु सार्वकालिकीषु च व्यक्तिषु तत्तज्जातितादात्म्यवतीषु तत्तज्जातिसमवायवतीषु वा तत्तज्जातिरिति तस्या विभुत्वम् । सर्वासां जातीनां विभुत्वे तत्प्रयुक्ते नित्यत्वे च सत्यपि न सर्वस्या जातेः सर्वत्र स्वाश्रयेऽपि च सर्वदा उपलब्धिव्यञ्जकाभावात् । यत्र यदा च यस्या जातेर्व्यञ्जकमस्ति तत्र तदा च तेनाभिव्यक्ता सा जातिरुपलभ्यते, नान्यत्र नान्यदा नान्या च । जातेर्व्यञ्जकञ्च ज्ञातं सदेव व्यञ्जकं न तु चक्षुरादिवदज्ञातं सत् । जातेर्व्यञ्जकञ्च नानाविधम्—यथा गोत्वस्य सास्नालाङ्गूलककुदखुर-विषाणादिरूपा, घटत्वस्य च कम्बुग्रीवादिरूपाऽऽकृतिर्व्यञ्जिका । तदुक्तं आकृतिग्रहणा जातिरिति । ब्राह्मणत्वादि जातेस्तु निराकाराय ब्राह्मणाद्ब्राह्मण्यां जातत्वादिकं व्यञ्जकम् । तदुक्तम्—सकृदाख्यात-निर्ग्राह्या इति ।

काश्चन जातयो न स्वभिव्यक्तौ आकृतिमपेक्षन्ते । किन्तु स्वाश्रयी-भूतया व्यक्त्यैवाऽभिव्यज्यन्ते । तदुक्तं वाक्यपदीये[१]—

पृथिव्यादिष्वभिव्यक्तौ न संस्थानमपेक्षते ।
अनुच्छिन्नाश्रयाज्जातिरनित्येऽप्याश्रये स्थिता[२] ।। इति ।।

अयमर्थः—पृथिवीत्वाप्त्वतेजस्त्वादयो जातिविशेषाः प्रतिनियता-वयवरचनाऽनपेक्षा एव महति परिमिते चाश्रयेऽभिव्यक्तिमासादयन्ति ।

---

१. ( वा० प० तृ० का० जा० हे० रा० टी० ३।१।४१ ) ।। इति ।।
२. ( वा० प० तृ० का० जा० स० ३।१।४१ ) ।। इति ।।

तथा हि लोष्ठोऽपि पृथिवीरूपेण प्रतीयते, मृत्समूहोऽपि घटोऽपि, पर्वतोऽपि इत्यादि। एवं समुद्रोऽपि बिन्दुरपि चोदकत्वेन प्रतीयते इति।

विभुत्वे सर्वव्यक्तिसंबद्धा स्वाश्रयव्यक्तिमात्रसंबद्धा वा। जातिविभुत्वादेव सर्वव्यक्तिसंबद्धा। किन्तु स्वाश्रयत्वेनाभिमतव्यक्तिषु तस्यास्तादात्म्यं समवायो वा। अन्यत्र तु कानिकदेशिकविशेषणतादि रूपः कल्प्यः। उपलब्ध्यनुपलब्धी तु व्यञ्जकसत्वासत्वाभ्याम्। यथाऽऽत्मनो विभुत्वेऽपि देहावच्छेदेनोपलब्धिः, काष्ठकुड्याद्यवच्छेदेन तु अनुपलब्धिर्यथायथं मनोरूपस्य ग्राहकस्य सत्वासत्वाभ्याम्। यथा वा शब्दविभुत्वादेर्ध्वनिरूपस्य व्यञ्जकस्य सत्वासत्वाभ्यां शब्दस्य क्वचिदुपलब्धिः क्वचिदनुपलब्धिरिति। तदेवं व्यक्तिसर्वगत्वं सर्वसर्वगतत्वञ्च जातीनां मतभेदेनावस्थितम्। तत्र सर्वसर्वगतत्वं तासामुक्तं वाक्यपदीये[1]:—

ब्राह्मणत्वादयो भावाः सर्वप्राणिष्ववस्थिताः।
अभिव्यक्ताःस्वकार्याणां साधका इत्यपि स्मृतिः[2]॥

अयमर्थः—भवन्ति सर्वत्रेति भावाः। ब्राह्मणत्वक्षत्रित्वादयः सामान्यविशेषाः ते प्राणिषु पिण्डेषु क्षत्रियादिष्ववस्थितत्वात् सर्वगताः।

तथापि च ब्राह्मणमालभेत इत्यादौ न सांकर्यप्रसङ्गः, यस्मात्सर्वगतत्वेऽपि प्रतिनियताऽभिव्यञ्जकव्यङ्ग्या इति प्रतीतस्य क्रियाङ्गत्वात् यत्रैवाभिव्यक्तिमासादयन्ति उपदेशादिनाव्यञ्जकेन तत्रैव स्वकार्यसंपादका इत्यविच्छिन्नाऽऽगमपारम्पर्येण स्मर्यते। यथा सर्वगतत्वं पारम्पर्यागतं तथा प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमपीति। अत्र पद्ये आदि ग्रहणेन अचेतनजातीनामपि घटत्वपटत्वादीनां सर्वगतत्वं विवक्षितम्। चेतनजातयोऽपि अचेतनेषु अवस्थिता इति पूर्णं सर्वगतत्वमुक्तं वाक्यपदीये[3]—

---

१. ( वा० प० तृ० का० जा० स० हे० रा० टी० ३।१।४४ ) ॥ इति ॥
२. ( वा० प० तृ० का० जा स० ३।१।४४ ) ॥ इति ॥
३. ( वा० प० तृ० का० जा० स० हे० रा० टी० ३।१।४४ ) ॥ इति ॥

चित्रादिष्वप्यभिव्यक्तिर्जातीनां कैश्चिदिष्यते ।
प्राण्याश्रितास्तु ताः प्राप्तौ निमित्तं पुण्यपापयोः[1] । इति ।

अयमर्थः—आलेख्यनिर्मिते पुस्तककर्मणा दार्वादिना वा कृतेऽपि ब्राह्मणे सादृश्यात्तदाकारानुकारप्रत्ययोदय इति तत्रापि तज्जातिप्रकाशः । प्राण्युपघातात्तु अधर्म इति चित्रस्थोपघाते तदभावः । एवं धर्मोऽपि चित्रस्थब्राह्मणपूजायां न भवति । कैश्चिदिति वचनादत्रार्रुचि सूचयति । मुख्यसादृश्यात्प्रतिकृतिषु प्रत्ययानुगमोपपत्तिर्न तु तद्वशाज्जातिसमवाय इति युक्तम् इति[2] ।

---

## ८—जातिः प्रत्यक्षा अप्रत्यक्षा वा

यो गुणो यदिन्द्रियग्राह्यस्तन्निष्ठा जातिस्तदभावश्च तेनैवेन्द्रियेण गृह्यते इति नैयायिकानां प्रवादो[3] लोक सिद्धत्वात्सर्वैरपि जातिवादिभिरभ्युपेयः । एवञ्च प्रत्यक्षगता प्रत्यक्षाऽप्रत्यक्षगता इति अभ्युपेयम् । यथाऽऽत्माकाशकालदिशां परमहत्परिमाणगता परममहत्त्वरूपा जातिरप्रत्यक्षा । तदाऽऽश्रयस्याऽऽप्रत्यक्षत्वात् ।

---

१. ( वा० प० तृ० का० जा० स० ३।१।४५ ) ।। इति ।।
२. ( वा० प० तृ० का० जा० स० हे० रा० टी० ३।१।४५ ) ।। इति ।।
३. ( त० सं० टी० न्या० बो० प्र० ख० गुण० ल० प्र० ) ।। इति ।।

## ९—जातिरुपलक्षणं विशेषणं वा.

द्रव्यं पदार्थं इति वादिनो मते जातिरूपलक्षणं। केवलस्य द्रव्यस्यैव पदशक्यत्वात्। जातेस्तदव्यावर्तकत्वाद्, आनयनादिविधेयक्रियाया-मनन्वयित्वाच्च। तथा हि विधेयानन्वयि व्यावर्तकमुपलक्षणं भवि। यथा काकवन्तो देवदत्तस्य गृहा इत्यत्र काक उपलक्षणम्! सर्वं कालिकत्वाऽभावेन विधेयगृहान्वयित्वाद् व्यवर्तकत्वाच्च। यद्यपि उपाधिरपि विधेयानन्वयी व्यावर्तको भवति। कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रमिति वादिनां कर्णशष्कुलिरुपाधिः, श्रोत्रत्वरूपे विधेयेऽनन्वयाद् तन्नभसो-घटाकाशादितो व्यावर्तकत्वाच्च। तथापि विद्यमानत्वाविद्यमानत्वाभ्याम् उपाध्युपलक्षणयोर्भेदः।

उपाधिर्हि विद्यमान उपलक्षणन्तु अविद्यमानं भवति। यथा प्रागुदाहृतयोरेव। यत्र तु काकस्य विद्यमानत्वं तत्र तस्योपाधित्वमेव। जातिविशिष्टं द्रव्यं पदार्थं इति वादिनां तु जातिर्द्रव्ये विशेषणम्। विशेषणलक्षणन्तु विद्यमानत्वे सति विधेयाऽन्वयित्वे सति व्यावर्तकत्वम्। यथा लम्बकर्णमानयेति। अत्र लम्बौ कर्णौ विशेषणमन्यपदार्थे। तत्र जातेरुपलक्षत्वपक्षे तस्य अशक्यत्वेन न शाब्दबोधे मानं किन्तु केवलस्य द्रव्यस्यैव। नापि च साक्षात्परम्परया वा विधेयक्रियान्वयः। विशेषणत्वे तु द्वयमपि भवत्येव यथा घटमानय इत्यत्र घटत्वस्य आनयन-क्रियान्वय इति न विशेषणत्वं किन्तूपलक्षणत्वम्। घटं पश्य इत्यत्र तु तस्यापि दर्शनक्रियान्वय इति तस्य विशेषणत्वम्।

सर्वादीनि सर्वनामास्ति इत्यत्र सर्वशब्दस्य विशेषणत्वमाश्रित्यैव तद्गुणसंविज्ञानो बहुव्रीहिरिति गीयते। जक्षितेरूपलक्षणत्वमाश्रित्य तु—जक्षित्यादयः षड् इत्यत्र अतद्गुणसंविज्ञानो बहुव्रीहिरिति वदन्ति। तस्यान्यपदार्थस्य गुणा विशेषणानि संविज्ञायन्ते विधेयान्वयित्वाऽदिना

यत्राऽऽसौ तद्गुणसंविज्ञानो बहुव्रीहिरिति व्युत्पत्तिः। तद्विपरीतस्तु अतद्गुणसंविज्ञानः। तत्राऽद्येऽजहत्स्वार्था वृत्तिरिति व्यवहारः। द्वितीये तु जहत्स्वार्था वृत्तिरिति[1]।

---

## १०—सत्तारूपा एकैव जातिर्गोत्वादिरूपैरनेका वा

तत्र न्यायादिनये द्रव्यगुणकर्मसु परा जातिः सत्ता द्रव्यत्वादीनां व्यापिका। सामान्यविशेषसमवायेषु तु सत्ता जातिर्नास्ति, तेषु सदिति व्यवहारस्तु तेषां सत्तासामानाधिकरण्यप्रयुक्तः। जातित्वं विशेषत्वं समवायत्वं वा न न्यायादिमते जातिः। आद्येऽनवस्थानात्[2]। द्वितीये स्वतोव्यावृत्तत्वरूपस्यहानेः,[3] तृतीये समवाये समवायान्तराभावात्[4]। गोत्वादिरूपा अपि परापरजातयो घटत्वादिरूपा अपरजातयश्च सत्ताव्याप्यास्तद् व्याप्यव्याप्याश्च सन्त्येव तन्मते। अद्वैतिनां तदनुगामिनां वैयाकरणानाञ्च मते परमार्थसती एकैव जातिर्महासत्तारूपा परब्रह्मस्वरूपा तस्या एव गोत्वादिजातिभेदेन विवर्ते सति गौर्गौरिति घटोघट इति नानाविधो व्यवहारः। तदुक्तं वाक्यपदीये—

सम्बन्धिभेदात्सत्तैव भिद्यमाना गवादिषु।
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः[5] ॥इति॥

अयं भावः। एकाऽपि सत्ता महासामान्यरूपाऽऽश्रयादिभिः स्वसंबन्धिभिरध्यारोपितभेदा गवाश्वादिषु गोत्वाश्वत्वादिरूपा अपरजाति-

---

१. ( वै० क० भू० स० श० नि० का० ३।४ ) ॥ इति ॥
२. ( न्या० सि० मु० प्र० ख० ) ॥ इति ॥
३. ( न्या० सि० मु० प्र० ख० ) ॥ इति ॥
४. ( न्या० सि० मु० प्र० ख० ) ॥ इति ॥
५. ( वा० प० तृ० का० जा० स० ३।१।३३ ) ॥ इति ॥

विद्यते। तथा हि गोः सत्ता या विवर्तो गोत्वम्, नापरं सकलगवानुगतं प्रतीयते। एवमश्वस्य सत्ता विवर्तोऽश्वत्वमिति। तस्यामेव च गवादि-भेदभिन्नायां सत्तारूपायां जातौ सर्वे गवादयो डित्थादयश्च शब्दा वाचकत्वेन व्यवस्थिता इति नियतोपाधिवशादसांकर्येण जात्यभिधायिनः सिद्धा इति।

सत्तायास्तज्जातिरूपेण सर्वशब्दवाच्यत्वं समर्थितं वाक्यपदीये :—

तां प्रातिपदिकार्थञ्च धात्वर्थञ्च प्रचक्षते।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः[1] ॥ इति ॥

सर्वभावेषु सद्रूपं सामान्यमनुगतम् अभावस्यापि बुद्ध्याद्याकारेण निरूपणाद् बुद्ध्याकाररूपे तस्मिन् महासत्ता या अस्या अवियोग-इति रीत्या सर्वप्रातिपदिकवाच्या सत्ता। तदेतदुक्तमन्यत्रापि—"प्रातिपदिकार्थः सत्ता" इति[2]। कारकाधीनोत्पत्तिकासु क्रियाव्यक्तिषु समवेता तत्क्रियारूपोपाध्युपगृहीतभेदासत्तैव तत्क्रियाजातिरूपेण धातुभिरपि अभिधेयत्वमापद्यते। सर्वंनामपदं सिद्धार्थाभिधायि, सर्वञ्च धातुपदं साध्यार्थाभिधाय इति सिद्धसाध्यरूपार्थद्वयात्मना च सत्ताया एव विवर्तनात्। तदपरराश्यभावात् सर्वशब्दविषयत्वं सत्तायाः। नामधातुपदोत्तरतत्प्रत्ययभागेनापि यथायथं संख्या-कारकाद्युपाधिविशिष्टा सत्तैव स्वविवर्तभूतैः संख्याकारकादिगतजाति-विशेषरूपैरभिधीयते। सा च सत्ता उत्पत्तिविनाशशून्यत्वान्नित्या। सप्रत्ययस्य सर्वदानुवृत्तेः। अहंकारस्तन्मात्राणि च पञ्चैतेषड्विशेष परिणामाः सत्तामात्रस्यात्मनो बुद्धिरूपस्य महत्त्वस्य एतेभ्यां विशेषेभ्यः परं यत्तल्लिङ्गमात्रं महत्तत्वं तस्मिन् सत्तामात्रे महत्यात्मनि अवस्थायैते विशेषाविवृद्धिकाष्ठामनुभवन्ति। स्थितिकाले प्रलयकाले

---

१. ( वा० प० तृ० का० जा० स० ३।१।:४३ ) ॥ इति ॥.
२. ( प्रौढमनोरमा यां कारकप्रकरणे प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा इति सूत्रे २।३।४६ पृ० सं० ४५९ ) ॥ इति ॥

प्रतीयमानाश्च तस्मिन्नेव महत्यात्मन्यवस्था यत्तन्नि:सत्तासत्तं नि:सदसदव्यक्तमलिङ्गं प्रकृतिप्रधानादिपदव्यपदेश्यं तस्मिन् प्रलीयन्ते इत्येवं सांख्ये बुद्धितत्त्वं महच्छब्दवाच्यमाद्यं जगत्कारणं निर्दिष्टमिति अतोऽनान्तरस्य विकारजातस्य कारणरूपानुगमात् कार्यकारणयोर्भेदाच्च सत्तारूपत्वसत्तारूपत्वमविरुद्धमिति सत्तारूपं सर्वं जगदाख्यातं भवतीति रीत्या सत्ताऽद्वैतवादः सांख्यनयेऽप्युपबृंहितः। एवञ्च सर्वशब्दवाच्या सत्ता सर्वेषां शब्दानां प्रवृत्तिनिमित्तभूता इति भिन्नोपाधिभिन्ना तत्तत्प्रकृत्यर्थभूता, अभिन्ना तु महासामान्यरूपा भावप्रत्ययत्वतलाद्य-भिधेया सेवेति न गोत्वमित्यादौ प्रकृतिप्रत्ययोरेकार्थताप्रसङ्गः। उपाधिभेदेन सत्तायां भेदात् प्रातिपदिकेन गवाश्रययास्तस्या अभिधानम्। त्वतलादिना भावप्रत्ययेन तु आश्रयान्निष्किष्टस्याऽभिन्नस्य सत्तामात्रस्याऽभिधानमित्यदोषात्। तत्तत्प्रकृत्यर्थं निमित्तीकृत्य च महासामान्ये भाव-प्रत्ययभेदा भवन्ति इति न प्रकृत्यर्थप्रत्ययार्थयोः सांकर्यप्रसङ्गः। सत्तारूपस्य महासामान्यस्य ब्रह्मरूपस्य प्रातिपदिकार्थत्वं धात्वर्थञ्चोपपादितं वाक्यपदीये—

प्राप्तक्रमा विशेषेषु क्रिया सैवाऽभिधीयते।
क्रमरूपस्य संहारे तत्सत्त्वमिति कथ्यते[1] ॥ इति ॥

अयं भावः। अधिश्रयणाद्यधःश्रयणान्तेषु विशेषेषु जायमानेषु सत्सु प्राप्तक्रमा पाकक्रियासत्ता रूपैव पच्धातुना साध्यत्वेन क्रियाऽभिधीयते। प्रागुक्तस्य क्रम पस्य संहारे सैव सत्ता सत्वं विद्धत्वेन द्रव्यमिति पाकादिपदेन कथ्यते। तदेवं सत्तासामान्याभिधायि धातोरेव क्रिया-वाचित्वं सत्ववाचित्वं चेति। सत्तैव च क्रियेति सत्वमिति च गीयते।

तथा हि—अधिश्रयणादिक्रियाणां व्यक्तिस्थानीयानां विशेषशब्द-वाच्यानां साधनपरिस्पन्दवशात् पौर्वापर्ये तद्गताऽपि जातिर्महासत्ता-ख्यापाकत्वादिरूपतया विवर्तमानाऽपूर्वाऽपराऽपि तथात्वेन प्रतिभासते

१. (वा० प० तृ० का० जा० स० ३।१।३५)। इति॥

इति सैव सक्रमा क्रिया सकलधातुविषया। साधनसम्पर्कहेतुकप्रतीयमानरूपा, परामर्शे तु सत्तैव सत्त्वं द्रव्यमित्युच्यते इतिसिद्धसाध्यरूपो द्विधा विवर्तः सत्तामात्ररूपस्य ब्रह्मणः परस्य प्रतिपादितः। तदेव हि सर्वत्र भावेष्वनुगतम्। अत्र दर्शने च सत्ता परब्रह्मरूपा सर्वस्य मूलकारणीभूता स्वकार्येभ्यः सर्वेभ्यो भावेभ्यः स्वभावतो न व्यतिरिक्ता। इति सर्वसन्मयम्, ततश्च सर्वशब्दानां सत्ता वचनत्वात्सर्वत्रजातिपदार्थव्याप्तिः। यद्यपि द्रव्यपदार्थपक्षेऽपि उपाधिभेदभिन्नस्य ब्रह्मरूपस्य द्रव्यस्य सर्वशब्दैरभिधानमुक्तं वाक्यपदीये तथापि तात्पर्यभेदादवस्थाभेदः।

तथा हि जातिपदार्थे सर्वत्रान्वयिरूपं जात्यात्मना ब्रह्म विवक्षितम्। द्रव्यपदार्थनये तु परिनिष्ठितरूपं सिद्धरूपम्। परमार्थतयेति दर्शनविकल्पः। अयमेव च द्रव्यपदार्थपक्षः पक्षद्वयेऽपि एकपक्षीभावरूपः परमार्थदृष्ट्या सिद्धान्तः। पदार्थचर्चाविषये चास्य ग्रन्थकारस्य अयमेवाभिप्रायः सम्बन्धादिविचारे ब्रह्मदर्शननयेनैव सिद्धान्तस्य विनिगमनया व्यवस्थापनात्। इति।

समग्रक्रियाकलापो ब्रह्मरूपायाः सत्ताया विवर्त एवेति अत्रार्थे निरुक्तकारसम्वादोऽपि दर्शितो वाक्यपदीये—

सैव भावविकारेषु षडवस्था प्रपद्यते।
क्रमेण शक्तिभिः स्वाभिरेवं प्रत्यवभासते[1] ॥

षड्भावविकारा भवन्ति इति ह स्माह भगवान् वार्ष्यायणिः इति निरुक्तकार आह। तत्र च भावविकारा इत्यस्य भावस्य परामर्शरूपस्य सत्तात्मकस्य जन्मादयो विकारा इत्यर्थः। सन्मात्रस्वभावा हि सत्ता स्वशक्तिवशाज्जन्माद्यवस्थाविशेषै र्विवर्तमाना जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यति इति षड्विधं व्यपदेशमासादयति। यद्यपि

---

१. ( वा० प० तृ० का० जा० स० ३।१।३६ ) ॥ इति ॥

सत्ताया जन्मादि विकारेभ्यः प्रथमतरमपि रूपमस्त्येव, तथापि तदस्ति शब्देन नाभिधीयते। तस्य निर्विशेषस्य लोके सदिति व्यवहारानर्हत्वात्। अपितु जन्मोत्तरकालभावी तस्या अवस्था विशेषोऽस्तीति व्यपदिश्यते। जन्मान्तरभावि हि तस्य रूपं लोके सदिति व्यवहार्यम्। सत्त्वावस्थायाः प्राक् पश्चाद्भाविन्यः पुनरवस्था जन्मविपरिणामादिरूपेण व्यवहार्याः।

तथा हि—सत्तैव स्वशक्तिमाहात्म्यात्पूर्वं जायते इत्यध्यवसीयते, पश्चादस्तीति। अवस्थितस्य भावस्य विकारापत्तौ तु विपरिणमते इति। तच्च विपरिणमन् मुहूर्तमपि नावतिष्ठते इति यावदनेन वर्धितव्यं तावद् वर्धते। मुहूर्तमप्यनवस्थानादेव चलतोऽपक्षीयते। ततोऽपि विनाश इति क्रमस्थितिः। प्रागुक्तरूपायास्तस्याः काश्चन शक्तयो विद्यन्ते येनैकैव सती तथा विचित्रेण रूपेण प्रतिभासते अस्याञ्च कारिकायां प्रागुक्तनिरुक्तवाक्ये च विकारशब्दो न परिणतिदर्शनाभिप्रायेण प्रयुक्तः, परिणामाभ्युपगमे सत्ताया अनित्यत्व प्रसङ्गात्। किन्तु विकारोऽत्र विवर्ताभिप्रायेण प्रयुक्तः। तथा हि तत्कार्याऽनुकूलानां सर्वासां शक्तीनामात्मभूतं ब्रह्म। "पराऽस्य शक्तिर्विविधैव श्रूयते' इति श्रुतेः[1] इन्द्रो मायाभिः पुरूरु ईयते" इति श्रुतेश्च। तस्याश्चानेकविकारप्रदर्शनसामर्थ्यलक्षणाऽऽविद्याख्या शक्तिरेकाऽपि कार्यभेदेनारोपितनानात्वाऽऽस्ति इत्यागमविदो मन्यन्ते।

इत्थं च तदेव सत्तात्मकं ब्रह्म स्वाभिरेव शक्तिभिः स्वस्माद् व्यतिरिक्ताभिर्जन्मविकाररूपतयाऽऽवभासते - अविद्यायां सत्यां ब्रह्मविद्यां सत्यां तु अविद्याऽपगमे सर्वविवर्तप्रलयः। एवं तदेव ब्रह्मसत्तात्मकं सर्वभावेषु समानरूपं तद्व्यतिरिक्तस्याऽभावादिति फलितम्।

ननु यदि स्वशक्तिमहिम्नासत्तात्मकं ब्रह्मैव जन्मादिरूपतयावभासते इत्युच्यते तदा कथं न जन्मादीनां युगपदवभासः कथं क्रमेणैव, नहि क्रमो नाम क्रियाविशेषः कश्चिद्, यमाश्रित्य यस्य भावाभावाभ्यां

---

१. ( श्वेताश्वतरोपनिषत् अ० ६, मं० सं० ८ ) ॥ इति ॥

जन्मादीनां कालभेदेन च भावाभावो कालभेदेन स्याताम्' इति चेदत्र सत्तारूपस्य ब्रह्मणः कालाख्यापि शक्तिरस्तीत्याश्रित्य समाहितं वाक्यपदीये—

आत्मभूतः क्रमोऽस्त्यस्य। यत्रेदं कालदर्शनम् ॥
पौर्वापर्यादिरूपेण प्रविभक्तमिवस्थितम्[1] ॥

अयं भावः। योऽयं जन्मादिरूपाणां क्रमः सोऽपि ब्रह्मरूपायाः सत्ताया आत्मभूत एव। न केवलं जन्मादिरूपा क्रिया एव ब्रह्मरूपायाः सत्ताया आत्मभूता, किन्तु तासां क्रमोऽपि तस्या आत्मभूतः। क्रमवद्भ्यो व्यतिरिक्तस्य क्रमस्याऽननुभवात्। यत्र क्रमे इदं कालदर्शनम्, स क्रमः काल एव ब्राह्मणः शक्तिविशेषः सत्तारूपस्य। कालं नाम पदार्थानन्तरं पौर्वापर्यादिरूपेण प्रविभक्तं शास्त्रज्ञाः पश्यन्ति। क्रमाख्या हि कालशक्ति: ब्रंह्मणा जन्मवस्तु पदार्थेषु जन्मादिक्रियाद्वारमेव पौर्वापर्येणावभासोपगमं विधत्ते नापरोद्रव्यभूतः कालोऽस्ति।

एतच्चोक्तं वाक्यपदीये ब्रह्मकाण्डे :—

अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः।
जन्मादयो विकाराः षड्भावभेदस्य यो नयः[2] ॥ इति ॥

ननु कस्याऽपि जन्मनाशाववस्तुत्वात्कथं सत्तात्मकौ स्याताम्। तदुक्तं गीतासु—

नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः[3] ॥ इति ॥

इति चेदत्र नाशस्य सत्तात्मकत्वमेवं समाहितं वाक्यपदीये—

तिरोभावाभ्युपगमे भावानां सैव नास्तिता।
लब्धक्रमे तिरोभावे नश्यतीति प्रतीयते[4] ॥ इति ॥

---

१. ( वा० प० तृ० का० ज० स० ३।१।३७ ) ॥ इति ॥
२. ( वा० प० ब्र० का० १।३ ) ॥ इति ॥
३. ( गी० अ० २ श्लोक १६ ) ॥ इति ॥
४. ( वा० व० प० तृ० का० जा० स० ३।१।३८ ) ॥ इति ॥

अयं भावः। ब्रह्मस्वरूपभूता सत्ता उत्पत्तिविनाशरहितत्वान्नित्या, अतएव निरन्वयविनाशासहा अतएवाभावो नाम न भावाद् व्यतिरिक्तः। केवलं भावाऽभावयोः स्थितेः प्रागूर्ध्वंञ्च तिरोभावमात्रं यदभ्युपगम्यते, सैव नास्तितता कथ्यते यथायथं प्रागभावविनाशपदाभ्याम्। अविद्याख्या स्वशक्त्या नानाकार्यात्मकतां प्राप्ता सत्तैव तिरोभूय शक्तिरूपतया स्वकारणेषु अवस्थिता भावानां नाशो न तु निरुपासयोऽसौ।

समस्ते च भावेषु तिरोभूतेषूपसंहृतक्रमत्वात् सिद्धरूपः तिरोभावो नाश इत्यादिना नामपदेन प्रत्याय्यते। यदा तु सैव तिरोभावावस्थारूपा नास्ति, तदा साधनसंबन्धाल्लब्धक्रमा विवक्षिता भवति तदाख्यातपदप्रत्याय्या। तस्याः पूर्वावस्था अपक्षियते इत्युच्यते, उत्तरावस्था तु विनश्यति इति इमौ द्वौ भावविकारौ विरोधिपरिणामरूपौ। तथा च भवनधर्मेण भावस्याभवनविरोधात्तिरोभावमात्रं विनाश इति।

जन्मनोऽपि सत्ताविकारत्वोपपादनेन सत्तात्मकत्वमुपादितं वाक्यपदीये—

पूर्वस्मात्प्रच्युता धर्मादप्राप्ता चोत्तरं पदम्।
तदन्तराले भेदानामाश्रयाज्जन्म कथ्यते[1] ॥इति॥

अयं भावः। कारणे शक्तिरूपेणाऽवस्थानरूपात् तिरोभावाख्यात् पूर्वधर्मात् प्रच्युता, स्थित्याख्यधर्मान्तराभिव्यक्त्यनुकूलाञ्च दशामप्राप्ता गृहीतक्रमा कार्याभिमुखा सत्ता उत्तरोत्तरावस्थाविशेषमासादयन्ती जायते इति व्यवह्रियते। न त्वसतः उत्पादरूपं जन्म तद्यथा न सतोऽत्यन्तं विनाशः, तथा जन्माऽपि नाभूताऽपूर्वस्याऽविर्भावः। तदुक्तं वाक्यपदीये—

नाभावो जायते भावो नैति भावोऽनुपाख्यताम्।
एकस्मादात्मनोऽनन्यौ भावाभावौ विकल्पितौ[2] ॥

---

१. ( वा० प० तृ० का० जा० स० ३।१।३९ ) ॥ इति ॥
२. ( वा० प० तृ० का० जा० स० ३।३।६१ ) ॥ इति ॥

भावोनाञ्च पूर्वापरावस्थान्तरालवर्तिक्षणपरम्परा क्रमविवक्षयामेव जातिक्रियायां कर्तृतयाऽन्वयो भवति न तु परिनिष्ठावस्थायाम्। तदुक्तं वाक्यपदीये—

पूर्वामवस्थामजहत् संस्पृशन् धर्ममुत्तरम्।
संमूर्च्छित इवार्थात्मा जायमानोऽभिधीयते[1]॥

उत्तरावस्थाश्च पूर्वावस्थासु समारोपात्तद्गतं भावानां जन्मादि-क्रियाकर्तृत्वमुपपद्यते। व्यावृत्तो हि कारकम् पश्यन्तो जना "जायते घट" इति व्यवहरन्ति। कारकव्यापारसमाप्तौ तु घटोऽस्ति इति जन्मोत्तारकाला सत्ता व्यपदिश्यते। ततोऽपि धर्मान्तराविर्भावोन्मुख-तायां विपरिणमते। तत्रापि वृद्धो वर्धते इति जन्मविशेषा एवैते स्थिति-विपरिणामवृद्धिरूपाः। तदयमानुलाभ्येन परिणामः। तदेवं ब्रह्मरूपा सत्तैव जन्मादिक्रियारूपंविवर्तं प्राप्ता। षण्णामेव हि भावविकाराणां जन्मादिनां संबन्धी अन्यः क्रियाविशेषः पाकादिरूपः जन्मादिका क्रियाऽपि च सर्वधातुवाच्या। तत्रैव च प्रागुक्तायां सिद्धरूपतायां सत्यां द्रव्यता। सिद्धिर्हि निष्पत्तिरिति पूर्वभाविनी क्रियैव परिनिष्ठायां द्रव्यं नात्यन्तमर्थान्तरभूता इति। यदुक्तं सम्बन्धिभेदात्सत्तैव भिद्यमाना गोत्वादिरूपैर्विवर्तते इति, ते संबन्धिनः प्रदर्शिता वाक्यपदीये—

आश्रयः स्वात्ममात्रा वा भावा वा व्यतिरेकिणः।
स्व शक्तयो वा सत्ताया भेददर्शनहेतवः[2] ॥ इति ॥

अयं भावः। क्रियाद्रव्ययोः साध्यसिद्धरूपयोः सत्तात्मकत्वं प्राक् प्रतिपादितम्।

तद् व्यतिरेकेण च वस्त्वन्तराऽभावः, गुणादीनामपि च सिद्धरूपतया द्रव्यत्वमेव इति रीत्या यद्यपि सर्वंसत्तात्मकपरब्रह्ममयम् तथापि अविद्या-प्रवृत्तिरूपे व्यवहारेऽवभावमानस्य भेदस्याऽसत्यस्यापि अनपलपनीयत्वाद् द्रव्यादिसत्ताहेतुकः प्रविभागोऽयमविरुद्धः। तत्र सत्तायाः स्वाधारो व्यञ्जकत्वाद् गोत्वादिभेदावभासस्य हेतुः।

---

१. ( वा० प० तृ० का० जा० स० ३।७।११८ ) ॥ इति ॥
२. ( वा० प० तृ० का० जा० स० ३।१।४० ) ॥ इति ॥

न तु भेदस्यैव हेतुः स्वरूपतः सत्ताया अभेदात्। तद् यथा ऐकमपि मुखं तैलोदकादर्शमण्किपाणादावनेकरूपमवभासते। एवं व्यञ्जकानां गवादिनां भेदात् सत्ता गोत्वाश्वत्वादिरूपतयाऽवभासते। स्वात्मीया वा मात्राः परिकल्पिता अंशा गोत्वादिसामान्यविशेषाः परिच्छिन्न-भावाश्रिताः सर्वगतायाः सत्तायाः परिच्छिन्नाऽवभासतां दर्शयन्ति। येनाऽविच्छिन्नाऽपि सा सत्ता विच्छिन्नेवाऽवभासते। ते च गोत्वादयः आश्रयभेदादेव सत्तातः परिकल्पितभेदाः। दृष्टश्च स्वांशैरेव परिकल्पितैर्भेदावभासः। तद् यथाऽवयविनः। अर्थान्तरत्वेऽनाव-भासमाना वा देशकालेन्द्रियादयो भेददर्शनहेतवः सत्तायाः। इहेदानी-मिदम्, अन्यत्रान्यदान्यत् इति देशादिनिमित्तो वस्तुभेदः। तथा काचकामलाद्युपहतनयनानां शुक्ले शंखे पीतावभास इति इन्द्रिय-निमित्तो भेदः। देशादावपि च सत्ताया भेदका अन्ये सम्बन्धिन इति नेतेरतराश्रयता। तथा चायमत्र परमार्थः। आत्मीया एव शक्त्यो योग्यताख्याः सत्तायास्तथाविधाः सन्ति याभिर्विश्वप्रपञ्चं रचयति। तद् यथा चिन्तामणिरर्थिनां यथाऽभिप्रायमाकारनानात्वमुपदर्शयति तथाऽनन्तशक्तिसन्मात्रं ब्रह्म अविद्याविलसितसहकृतं संसारिकप्रमातृ-व्यवहारविषये नामरूपं चकास्ति इति वस्तु सत्त्वमुद्घाटितं सत्ता-निरूपणान्ते वाक्यपदीये।

---

## ११—जातेः स्वाश्रयोत्पत्तौ हेतुत्वविमर्शः

जातेर्नित्यत्वेन सर्वगतत्वेन कारणेषु सन्निहितायाः कार्योत्पत्तौ सहकारिकारणत्वमित्युक्तं वाक्यपदीये :—

न तदुत्पद्यते किञ्चिद् यस्य जातिर्न विद्यते।
आत्माभिव्यक्तये जातिः कारणानां प्रयोजिका[१] ॥इति॥

---

१. ( वा० प० तृ० का० जा० स० ३।१।२५ ) ॥ इति ॥

अयं भावः। व्यक्त्यधीना जात्यभिव्यंक्तिरिति कृत्वां आश्रयस्य कारणानां प्रयोजककतृंत्वमिवालम्बते जातिः। सदा कार्योत्पत्तिदेशे कार्योत्पत्तेः प्राक् सन्निहितायाः कारणानां सहकारित्वमिति यावत्। वैशेषिकदर्शने जातीनां स्वाश्रयकार्योत्पत्तौ निमित्तकारणत्वादेव-मुक्तम्।

अद्वैतनये तदनुगामिवैयाकरणनये च गोत्वजातिरूपेण तदाऽश्रय-व्यक्तिरूपेण च ब्रह्मरूपा सत्तैव विवर्तते इति सत्तारूपा या जातेर्विवर्तो-पादानत्वमेवेत्यवधेयम्। ननु जातेः स्वाश्रयेऽन्तःसन्निधानम् भवति न तु कारणेषु ततश्च कारणेषु असंनिहितायास्तस्याः कथं कारणानां प्रयोजकत्वमिति शङ्काऽपि समाहिता वाक्यपदीये :—

कारणेषु पदं कृत्वा नित्यानित्येषु जातयः।
क्वचित्कार्येष्वभिव्यक्तिमुपयान्ति पुनः पुनः[1] ॥

अयं भावः। जातीनां सर्वगतत्वात् कारणेष्वपि सन्निधानात्तत्र तासां पदन्यास उपपद्यते। तथा च कार्याणामुपादानकारणेषु जात्यात्मनाऽवस्थानाज्जातिरूपोपरागेण कारणान्तमवसायात्। तत्र साधनानां प्रवृत्तौ कार्याऽरम्भे तत्समवेतजात्यभिव्यंक्तिरसकृदा-श्रयोपलब्धौ सत्यां भवति। न्यायादिनये नित्यादि कारणानि परमाणवः दर्शनान्तरे वा प्रधानपुरुषादयः, अनित्यानि घटादीनां वीरणादयः। एवं प्रागुत्पत्तेर्नित्यानित्येषु कारणेषु पदं कृत्वा स्थिता व्यक्त्युत्पत्तये कारणानां प्रयोजिका जातिः क्वचित् कार्येषु दृश्येषु कटादिषु अभिव्यक्तिमुपयाति। क्वचित्तु अदृश्येषु कार्येषु वाय्वादिष्व-भिव्यक्ति नोपयाति। एवं व्यक्त्युत्पत्तेः प्रागपि जातेर्विद्यमानत्वा-ज्जातिर्नित्येति स्थितम्। एवञ्च घटं करोति इत्यादौ जातिरूपाश्रयणे न घटस्य साधनत्वं व्यक्तिरूपाश्रयणे न च तस्य साध्यत्वरूपं कर्मत्व-

---

१. ( वा० प० तृ० का० जा० स० ३।१।२६ ) ॥ इति ॥

मिति घटः कारकं कर्मेति सामानाधिकरण्येन व्यवहारोपपत्तिः। न हि जातिव्यक्तीगवाश्त्ववदत्यन्तभिन्ने, नीरक्षीरवदविविक्तस्वरूपत्वादित्युभयरूपाश्रय उभयरूपो व्यवहार उपपद्यते।

---

## १२—विधिप्रतिषेधयोर्जातिः साधनत्वविमर्शः

एवं कारणानां प्रयोजिका जातिरित्युक्तम्। तथा च जातिः पादार्थं इति पक्षे ब्राह्मणादिद्रव्यं नालम्भनादि क्रियासाधनम्, किन्तु जातिरेव आलम्भनादि क्रियाविधौ तत्प्रतिषेधे वा साधनम् इति ब्राह्मणमालभेतेति विधौ चोदिते तस्याः प्रति व्यक्ति परिसमाप्तत्वात्सकृदनुष्ठानेऽपि शास्त्रार्थः कृतो भवति। इति न सकलब्राह्मणालम्भनमशक्यत्वात्। यथाऽऽलम्भनादिविधिर्जातौ तथा न ब्राह्मणं हन्यात् इत्यादिः प्रतिषेधोऽपि जातावेवेति सकृद्ब्राह्मणहननानुष्ठानेऽपि चोदितस्या हननस्योल्लङ्घनाद् दोषो भवति। तथा हि अहननं चोदितम् न हन्यादिति यदि क्वचित्तद्धननमनुष्ठितं तदाविरुद्धक्रियाऽऽचरणात् प्रत्यवायो भवति। क्वचित्तु ब्राह्मणे विहितालम्भनाऽनुष्ठाने सति अन्यत्र ब्राह्मणे तदभावेऽपि न शास्त्रविरोधः। तस्माद् यदा यदा हननबुद्धिरुत्पद्यते तदा तदा प्रतिषेधः। सर्वत्रब्राह्मणजातौ व्याप्रियते। न ब्राह्मणं हन्यात् इत्यत्रं न ब्राह्मणत्वजात्यवच्छिन्ने हननकर्तव्यता प्रतिषेधस्यानुष्ठेयत्वम्, अभावरूपत्वेन अयोग्यत्वात्। किन्तु तत्प्रतिषेधविषयकस्य संकल्पस्यानुष्ठेयत्वमिति।

इत्थं प्रवृत्तिनिवृत्तिमये द्विविधेऽपि पुरुषार्थे सर्वत्रजातेरुपयोगो दर्शितः तदेतदुक्तं वाक्यपदीये—

विधौ वा प्रतिषेधे वा ब्राह्मणत्वादि साधनम्।
व्यक्त्याश्रिताश्रिता जातेः संख्याजातिर्विशेषिका[1]॥

---

१. (वा० प० तृ० का० जा० स० ३।१।२८ ॥ इति ॥

द्रव्यरूपां व्यक्तिमाश्रितां या एकत्वसंख्या तदाश्रिता या जातिः आश्रयभेदभिन्नेषु एकत्वगुणेषु अभिन्नप्रत्ययनिमित्तभूता, सा प्रातिपदिकवाच्यां द्रव्यजातिमेकार्थसमवेतसमवायाद् हेतोर्विशिनष्टि। जातेः पदार्थत्वे विभक्तेरपि संख्याजात्यभिधायित्वाद् वास्तवेन रूपेण प्रत्यार्थभूताऽपि संख्याजातिर्विशेषिका। शाब्दमर्यादया तु प्रत्ययार्थस्य प्राधान्याद् असौ विशेष्या।

एवञ्चैकत्वसंख्याया अत्र विवक्षितत्वान्न युगपदनेकब्राह्मणव्यक्तिकर्मकालम्भनानुष्ठानं चोदितं भवति। जातिपदार्थवादे सत्यपि एकस्यामपि व्यक्तौ सर्वात्मना जातिः परिसमाप्तेति न युगपदनेकव्यक्त्यालम्भनप्रशक्तिरूपो दोषः। फलकामनाहेतुकश्च विधिरिति कामनायां सत्यां व्यक्त्यन्तेऽपि आलम्भनाऽनुष्ठानाविरोधः। एवं प्रतिषेधेऽपि हननबुद्धिनिमित्तमिति तदुत्पत्तौ सर्वत्र प्रतिषेधप्रवृत्तिः। तदेवं जातिपदार्थवादे विधिप्रतिषेधचोदनानां सूपपत्तिरिति।

---

## १३—जातिव्यक्त्योः सत्यत्वासत्यत्वविमर्शः

शाब्दबोधविशेषणभावेन प्रतीयमानयोर्जातिव्यक्त्योर्जातिः सत्या व्यक्तिस्तु असत्या इत्यद्वैतवादिनस्तदनुसारिणो वैयाकरणाश्च तदुक्तं वाक्यपदीये—

सत्यासत्यौ तु यो भावौ प्रतिभानं व्यवस्थितौ।
सत्यं यत्तत्र सा जातिरसत्या व्यक्तयः स्मृताः[1]॥ इति॥

सर्वोऽपि भावो जातिव्यक्तिरूपतया भागद्वयात्मकः, तत्र जातिर्महासत्ताख्या ब्रह्मरूपतया सत्या गोत्वादिरूपा वा नित्यत्वेनाबाध्यत्वात् सत्या। व्यक्तिस्तु जात्याधारत्वेन कल्पिताऽऽगमाऽपायशालिनी अविद्याप्रवृत्तिरूपत्वेनासत्येति विवेकः। तदुक्तं पस्पशाह्निके—

---

१. ( वा० प० तृ० का० जा० स० ३।१।३२ ) ॥ इति॥

"तदपि नित्यं यस्मिंस्तत्त्वं न विहन्यते"[२] इति ॥

यस्मिन् सति व्यक्तीनां तत्त्वं तद् बुद्धिविषयत्वं न विहन्यते तदेव हि सत्यमिति तदर्थः।

यथा सुवर्णत्वे सति रुचिकस्वस्तिकादीनां परस्परं व्यावृत्तानामपि सुवर्णमित्यनुवृत्ताबुद्धिविषयत्वं न विहन्यते उतो रुचकादिव्यक्तिषु सुवर्णत्वमेव सत्यम्। रुचकादि व्यक्तयस्तु असत्या इति।

एवं प्रकारान्तरेणाभेदविवक्षायां तेज इत्यन्वीयप्रत्ययनिमित्तं सुवर्णत्वव्यापकं तेजस्स्वरूपं सामान्यमेव सत्यम्। अनेन क्रमेण सर्वान्ते परा प्रकृतिः सर्गे सर्वविकारानुयायिनी प्रलये च प्रशान्तसर्वविकारकल्लोला चिदेकघना ब्रह्मरूपा महासत्ताऽऽख्या जातिरेव सत्येति आगमविदः। तदुक्तं हेलाराजीयेऽत्रैव—

पृथिवी धातौ किं सत्यम्, ? विकल्पः। विकल्पे किं सत्यम् ? विज्ञानम्, विज्ञाने किं सत्यम् ? ॐ अथ तद् ब्रह्म इति। अस्यार्थः—

पृथिवी नामके पदार्थे किं सत्यम् ? विकल्पः। विकल्प्यते व्यवर्तते पृथिवी व्यक्तिर्येनाशो विकल्पो विकल्पविज्ञानगोचरीभूतम्। पृथिवीत्वरूपं सामान्यम्।

विकल्पे किं सत्यम् ? विज्ञानम्। पृथिवीत्वरूपस्य सामान्यस्य विज्ञानेऽधिष्ठानरूपविद्याकल्पितत्वात्। विज्ञाने किं सत्यम् ? विषयविशिष्टे विज्ञानस्वरूपे कोंऽशः सत्यः। ॐ। ओङ्कार पदस्यार्थः। ओं पदस्यार्थस्तु ब्रह्मैवेति। कारिकायां प्रतिभावमित्यत्र वीप्सा तु परमलेन वस्तूनां भेदादुपपद्यते, न तु अद्वैतमतेन वीप्सोपपत्तिसंभवः। अस्ति घटो भाति घट इत्यादिरूपप्रत्ययप्रामाण्येन चित्सामान्यस्य सर्वत्राऽनुऽनुगमादेव महासत्ता रूपप्रभावा प्रतियोगसामान्यं विश्वस्य जगतः कारणं सत्यरूपं निर्दोषदर्शनैः साक्षात्कृत्योपदिष्टम्। ते तत्र भवन्तश्चास्माकं प्रमाणमिति।

---

२, (म० भा० पस्पशा अ० १, पा० १, आ १, पृ० सं०४४) ॥ इति ॥

## १४-समासे भावप्रत्यये नी सामान्यविशेषाभिधानानभिधानविमर्शः

अत्रैवं विचार्यते। सा नित्या सा महानात्मा तामाहुस्त्वतलादय इति वाक्यपदीये जातिसमुद्देशप्रकरणे उक्तम्। तत्रमालतीगन्धत्वं उत्पलगन्धत्वम्, मल्लिकागन्धत्वम् इति किं परजातौ गन्धत्वसामान्ये भावप्रत्ययः, किं वा तद् व्याप्यायामपरजातौ पुष्पविशेषाश्रितगन्धविशेष-समवायिन्याम् इत्यत्र संदेहे समाहितं वाक्यपदीये—

जात्युत्पलादि गन्धादौ भेदतत्त्वं यदाश्रितम्।
तद् भावप्रत्ययैर्लोके नित्यत्वान्नाभिधीयते[1]॥

अयं भावः। इह जगति सर्वोऽपि लौकिकशब्दव्यवहारो विवक्षाधीनः। तत्र यदा मालतीगन्धादिशब्दात्ससासादभावप्रत्ययः। यत्तूच्यते वृत्तिद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेनेति। तस्य सम्बन्धाऽभिधाने तन्मूलकापरसामान्याभिधाने च तात्पर्यम्।

इति सप्तमीसमासे षष्ठीसमासे वा तत्पूर्वकः शेषसम्बन्धस्तदवाच्यः। यदा तु पूर्वंगन्धशब्दादेव भावप्रत्ययः पश्चात् समास इति विवक्षा तदा मालत्युत्पलाद्याश्रितस्य गन्धस्य यत्तत्वं पारमार्थिकं तदाश्रितम् यदपर-सामान्यं तद् भावप्रत्ययवाच्यं न भवति। अनित्यत्वेन सर्वत्रा-संनिधानात्।

अयमत्रार्थः—यदुत्पलगन्धसमवेतं विशिष्टं सामान्यं न तच्चन्दन-गन्धादिव्यक्तौ संनिहितमिति व्यभिचारादनित्यम् न तु सामान्यमनित्यं भवति। गन्धशब्दश्चाऽविशेषेण गन्धमात्रे वर्तते इति गन्धमात्रव्यापिनैवास्य प्रवृत्तिनिमित्तेन भावप्रत्ययाभिधेयेन भवितव्यम्। न चोत्पलगन्धसमवेतं विशिष्टं सामान्यं सर्वगन्धव्यापीति नैदमभिन्नम् गन्धशब्दप्रवृत्तिनिमित्तम्। आश्रयविशेषेणात्तु मालत्या गन्धत्वम्, उत्पलगन्धत्वमिति समवेत-समवायाद् विशेषणे विशिष्टज्ञानसिद्धिः। न चैवं नास्त्येव सामान्य-

---

१. ( वा० प० तृ० का० जा० स० ३।१।४७ ) ॥ इति ॥

विशेष०। आश्रयभेदेन गन्धव्यक्तीनां भेदाद् गोत्वव्याप्यशाबलेयत्वादिवदपरजातियोगोपपत्तेः।

अस्त्येव चोत्पगन्धो।मान्यतो व्यावृत्तोऽन्वयिप्रत्यय इति तन्निमित्तिकसामान्यसम्भवः केन वार्यते गन्धयुक्तिविदस्त्वभियुक्ताः। पश्यन्त्येव विशिष्टं सामान्यम्। समासादपि च भावप्रत्ययसामान्यविशेषसंबन्धस्य समासवाच्यत्वाच्छब्देनाऽप्रतिपादनादनित्य इति नाऽभिधीयते इति।

---

## १५—संविज्ञानपदाऽसंविज्ञानपदाभेदेन जातिभेदविमर्शः

जातयो द्विविधाः। कश्चित्संविज्ञानपदाः। कश्चित्तु असंविज्ञानपदा इति। तत्रान्त्या नरसिंहगौरखरत्वादिजातयोऽविद्यमाना साधारणवाचकाः स्व शब्देनानभिधीयमानाः। तथा हि नरसिंहत्वजातिवाचको नरसिंहशब्दोऽन्य एव पदद्वयघटितात् पुरुषो प्रयुज्यमानात् नरसिंहपदात्। यदुक्तं वाक्यपदीये—

अस्वशब्दाभिधानस्तु नरसिंहादिजातयः।
सरूपावयवे वाऽन्या तासु श्रुतिरवस्थिता[1]॥

अयं भावः—नरसिंहत्वगौरखरत्वादिजातीनां वाचकोऽसाधारणः कश्चन शब्दो नास्ति। नरसिंहशब्दस्तु सिंहसदृशे नरेऽपि प्रयुज्यते एवं गौरखरशब्दो गौरे खरेऽपि प्रयुज्यते इति साधारण एव नत्वसाधारणः।

अस्वशब्दाभिधाना इत्यस्यार्थस्तु—अभिधीयतेऽनेनेत्यभिधानं न विद्यते स्वशब्दः स्वस्याऽसाधारण्येन वाचकः शब्दोऽभिधानं यासां नरसिंहत्वादि जातीनां तास्तथाभूता इति। उत्तरार्धार्थस्तु समानं रूपं ययोस्ताववयवोर्यस्या नरसिंह इत्यादि श्रुतेः शब्दं सा तथाभूतेव

१. ( वा० प० तृ० का० जा० स० ३।१।४८ )॥ इति॥

वस्तुतस्तु ततोऽन्या नरसिंहादि श्रुतिस्तासु नरसिंहत्वादिजातिषु वाचकत्वेनावस्थिता। एषा हि श्रुतिर्नरत्वसिंहत्वजातिद्वयविषयक-नरसिंहसदृशद्वयसादृश्येनावभासमाना नरत्वसिंहत्वजातिप्रतिभामुत्पादयति।

वस्तुतस्तु नरसिंहाभ्यामाख्यो नरसिंहः। अपितु जात्यन्तरमेवात्र चित्रस्वरूपे वस्तुनि समवेतम्। चित्रे रूपे चित्रत्वसामान्यमिवेति नरसिंह-स्वरूपजात्यन्तरा साधारणी एषा नरसिंहश्रुतिर्न शक्नोति नरत्वसिंहत्व-रूपं जातिद्वयं बोधयितुम्। स्वरूपतश्चाऽखण्डैवैषाश्रुतिर्न पदद्वयारब्धेति अवयवसादृश्यमपि न वास्तवमिति इव शब्दः कारिकायाम्। केवल-मात्रावयवसादृश्याभिमानमात्रम् यथा निरंशवाक्यस्थानामजापथ आदि पदानामिति भ्रान्त्या नरत्वादिजातिविषयकप्रतिभोत्पादनान्नेय-मसाधारणी नरसिंहत्वजातौ श्रुतिर्नापि अन्याऽसाधारणी विद्यते इत्यत्र इयम् स्वशब्दाभिधाना इत्युक्तम्। एवमियमाविज्ञानपदा नरसिंहत्व-जातिः। घटत्वादिजातिस्तु संविज्ञानपदा। तद्वाचकशब्दानामसाधारण-त्वात्। इति।

———

## १६—प्रकृत्यर्थजातेः प्रत्ययार्थसंख्या जातिकृतोपकारविचारः

इह जगति नामाख्यातभेदेन पदं द्विविधमेव। उपसर्गनिपातावपि नाम्नैवान्तर्भवतः। द्विविधोऽपि पदेऽस्ति प्रत्येकं भागद्वयम्। प्रकृतिः प्रत्ययश्च। तत्र सुबन्तपदगतप्रकृतिवाच्या द्रव्यजातिः तिङन्तपदगत-प्रकृतिवाच्या तु क्रियाजातिः। तयोः स्वाश्रये द्रव्ये क्रियायाम् वा समवायस्य परिच्छेदः निर्णयः क्रियते किमेकत्र द्रव्ये क्रियायाम् वा तस्याः समवायो विवक्षितः किं वा अनेकत्रेत्येवं रूपे संशये जायमाने सति तस्मिन्निर्णीयमाने यथायथं सुप्-तिङ् प्रत्ययवाच्यातातिर्द्रव्येण क्रियया वा साकं साक्षात्सम्बन्धाभावेऽपि तद्गतज्ञातिभ्यां सह एकार्थ-

समवेतायां संख्यायां समवायादुपयोगाय कल्पते। अथवा प्रत्ययाऽभिहिता या संख्या जात्या सामर्थ्यादक्षिता संख्या व्यक्तिद्रंव्यक्रियाजातिश्रयां सहैकार्थसमवायात् प्रकृतिवाच्यां तदन्यतरजाति विशिनष्टि ( परिच्छिन्नत्ति ) प्रतीतस्य हि परिच्छेदकत्वं नत्वभिहितस्यैव।

प्रतीतिश्च शब्दादर्थसामर्थ्याद् भवतु न तत्र कश्चन विशेषः। किञ्च गौः, गावो, पचति पचत, इत्यादौ विशिष्टजातीयो विशिष्टसंख्यावच्छिन्नश्चार्थः। प्राधान्येन प्रतीयेते इति प्रत्ययार्थस्य कारकसंख्यादेर्विशेषणत्वं प्रकृत्यर्थस्य च द्रव्यक्रिययोरन्यतरस्य विशेषणत्वम्।

तथा च क्रियाप्रधानमाख्यातमित्युपपत्तिः। पचतीत्यादौ प्रकृत्यर्थस्य क्रियारूपस्य सादृश्यत्वे न प्राधान्यात् प्रत्ययार्थेन कारकादिना तस्य विशेषणात्। औपगव इत्यादौ तु प्रकृत्यर्थविशिष्टस्य प्रत्ययार्थस्यापत्युरूपस्याभिधाने प्राधान्येनेत्येतदविषयकमेवेदं वचनम्। "प्रकृतिप्रत्ययो प्रत्ययार्थम् सह ब्रुतस्तयोः प्रत्ययार्थः प्रधानमिति। प्रायिकञ्चैतद् वचनम् तथा हि इह शास्त्रे संख्या प्रकृत्यर्थानुग्रहायोपतेति। गामानयेत्यादौ संख्याविशिष्टस्यैव प्राधान्यम्। एवञ्च सामान्येन प्रत्ययार्थविशिष्टः प्रकृत्यर्थोऽभिधीयते पदेन क्वचित्तु एतद् वैपरीत्यमिति। तदेतत्सर्वमुक्तं वाक्यपदीये—

जात्यवस्थापरिच्छेदे संख्यासंख्यात्वमेव वा।
विप्रकर्षेऽपि संसर्गादुपकाराय कल्पते[1] ॥

एतद् व्याख्यायां हेलाराजीयायाञ्च।

---

१. ( वा० प० तृ० का० जा० स० ३।१।४६ ) ॥ इति ॥

## १७—शब्दजात्यर्थजातिभेदेन जातिभेदविमर्शः

जातिः शब्दार्थ इति पक्षे घटशब्दादिगता घटशब्दत्वादिका जातिर्घटादिरूपार्थगता च घटत्वादिका एतद्द्वयमपि घटशब्देनाभिधीयते। तत्रापि प्रथमं घटशब्दगता जातिरेव तेनाभिधीयते, पश्चात्तु शब्दजातेरर्थजातावभेदाध्यारोपेणार्थजातेरभिधानं तेनेति क्रमः। तदुक्तं वाक्यपदीये—

स्वा जातिः प्रथमं शब्दैः सर्वैरेवाभिधीयते।
ततोऽर्थजातिरूपेषु तदध्यारोपकल्पना [1]॥ इति॥

अयं भावः। सर्वैः शब्दैः प्रथमं स्वाजातिरेवाऽभिधीयते। स्वा आत्मीया गोशब्दत्वादिका असाधारणी जातिर्न तु सकलशब्दसाधारणी-शब्दत्वादिका।

एवं च शब्दजातेरसाधारणत्वेन विशेषणतया सह शब्दस्य संबन्धाऽव्यभिचारः अर्थजात्या सह संबन्धव्यभिचारोऽपि इति स्वाजातिरेव शब्दस्य मुख्यमभिधेयमित्युक्तं भवति। तथा चाह वार्तिककारः "न वा शब्दपूर्वकोह्यर्थे संप्रत्ययस्" [2]इति।

अतएव शब्दस्यार्थजात्यऽभिधाने व्यभिचारिण्याः स्वरूपजातेर्नान्तरीयकमभिधानमिति। "प्रथममभिधीयते" इत्युक्तं कारिकायाम्। यदभेदेन यस्य प्रतिपत्तिरवश्यं तत्र तत्प्रतिपत्त्यमित्येतावताऽत्र प्राथम्यम् न तु क्रमेणाभिधानात्।

अथवा शब्दस्यार्थजात्या सह संबन्धग्रहकालापेक्षं प्राथम्यम्। तथा हि—शब्दरूपार्थजात्या सह सम्बन्धव्युत्पत्तिकाले नास्ति संबन्धः। तत्सत्त्वे तु तत्रार्थे शब्दस्य वाचकत्वेन विनियोगोऽनर्थकः स्यात्। अर्थस्य प्रतिपन्नत्वात् इति ज्ञायते सोऽर्थस्तावत्तेन शब्देन न प्रतिपन्न

---

१. ( वा० प० तृ० का० जा० स० ३।१।६ ) ॥ इति ॥
२. ( म० भा० अ० १, पा० १, सू० ६८ ) ॥ इति ॥

इति। यदि च स्वजात्यभिधानम् तदानीं न स्यात् तदाऽनर्थकत्वाद् विभक्तियोगो न स्यादिति।

"प्राक् संविज्ञानाऽभिसम्बन्धात् संज्ञारूपपदार्थिका" इत्युक्तम्।

अत्र रूपपदार्थः स्वरूपं जातिर्वा इति दर्शनभेदेनोच्यते। कारिकायां सर्वैरित्यनेन स्वरूपपरा अर्थपराश्च शब्दा गृह्यन्ते। स्वं रूपमिति सूत्रे स्वरूपपदेन शब्दसाधारणजातेरेव व्यवहारात्। तथा व्युत्पन्नेरपि शब्दैरविनाभावाच्छब्दस्वरूपेणावस्थिता जातिः प्रतिपाद्यते। अर्थस्य झटित्येव शब्दस्वरूपा भेदेनाऽपि यथा प्रतिपादितक्रमाश्रयेण ततः स्वजातिप्रत्यायनादन्तरमर्थजातीनां गोत्वादीनां स्वरूपेषु शब्दजातेः समारोपस्य कल्पनैव न परमार्थः।

अर्थस्य शब्दविवर्तत्वेन शब्दात्तत्वतो भेदाभावात्। यद्वा अर्थजात्या सह शब्दजातेरत्यन्तभेदात् सम्बन्धव्युत्पत्तिकाले गौरयमर्थं इति सामानाधिकरण्यान्यथानुपपत्त्याऽर्थजातौ शब्दजातेरभेदाध्यारोपः कल्प्यते। यथा—"गौर्वाहीक" इति। अन्यथा संकेतस्यैव कर्तुमशक्यत्वात्। यथा चायमनादिरपौरुषेयो वाच्यवाचकभावस्तथाध्यारोपोऽपि अन्यथा वाच्यवाचकभावएव नोपपद्येत।

यथा बौद्धस्य दृश्यविकल्पयोरेकीकारो भेदानध्यवसायरूपस्तथाऽयं शब्दजातेरर्थजातावभेदाध्यारोपः, न तु यथा गौर्वाहीक इत्यत्र पुरुषेच्छयाऽध्यारोपः। व्यवहारे शब्दार्थयोः सदैवाभेदावसायात्। प्रतिवर्णमनभिव्यक्ता साधारणी शब्दजातिरसमसमयभाविभिर्वर्णैः कथमभिव्यज्यते इति चेत्?

यथोत्क्षेपणत्वादिजातिरिति ब्रूमः।

तथा हि यद्यपि प्रत्येकं कर्मक्षणाः कर्मसाधारणजातेरभिव्यञ्जकाः। कर्मव्यक्तीनामयुगपदवस्थितत्वेन कर्मसमुदायानुपपत्तेरिति सिद्धान्तस्तथाऽपि नास्ति प्रथमस्य उत्क्षेपणक्षणस्य उत्क्षेपणत्वजात्यभिव्यञ्जनसामर्थ्यम्; तस्य परमाणुमात्रदेशाक्रमणमात्ररूपत्वेन सारूप्यवशतो

भ्रमणक्षणाद् दुरवधार भेदत्वात्। अतः स्वजात्यभिव्यक्तौ उत्क्षेपण-क्षणान्तरमपेक्षते। तस्य च भ्रमणक्षणाद् विशेषोऽस्त्येव, उपक्रम एव उत्क्षिपामि इत्येवं बुद्धिपूर्वकप्रयत्नजनितत्वात्। एवं गोशब्दमुच्चारयामि इत्येवं बुद्धिपूर्वकः प्रयत्नो यद्यपि गानगगन-शब्दजनकप्रयत्नादन्य एव, हेतुभेदाच्च तदघटकगकारयोरपि भेद एव तथापि सा दृश्यादसौ हेतुभेदो हेतुमद्भेदश्च दुरवधार इति प्रथमवर्णरूपो ध्वनिर्गोशब्दस्य रूपां जातिमस्फुटमभिव्यनक्ति इत्येवमावर्तमानोऽपि न विशदतरं गोशब्दत्वाभि-व्यक्तौ हेतुः। यथा तु गोशब्दावयवप्रबन्धः क्रमेणोपलब्धो भवति तदा गोशब्दस्वरूपजातिविशेषरूपोपाधियुक्ता गोशब्दव्यवहारा भवन्ति।

अवयवध्वनीनामयुगपदवस्थितत्वेऽपि चरमध्वनिक्षणे पूर्वपूर्वध्वनी-नामुद्बुद्धसंस्काररूढतया तदानीं सहचर्यात् परस्परावच्छेदवशेनगान-गगनादिविलक्षणतया गोशब्दस्य प्रतिभासनात्। यथा च श्लोकः सकृत्पठ्यमानो न स्फुटं स्वरूपतोऽवधार्यते, अभ्यासेन तु पठ्यमानः स्फुटावभासो भवति, तथा चरमध्वनिबुद्धौ रत्नतत्त्ववत् चकास्ति स्फोटतत्त्वम्। पदस्य प्रथमाक्षरेण हि शब्दजातेराभासमात्रं जन्यते तदुत्तरोत्तरवर्णकलापे न तु स्फुटतरस्फुटतमपदपरिच्छेदस्याधानम्। पूर्वपूर्वप्रत्ययानाम् संस्कारविशेषोत्पादनद्वारेणाभिव्यक्तिविशेषजनकत्वस्य रत्नतत्त्वादौ दर्शनात्। तस्माच्छब्दार्थप्रतिपद्यामहे इतिव्यवहाराद-वर्णानामर्थावबोधजनकत्वानुपपत्तेर्व्याकरणप्रक्रियायाश्च रेखागवयन्यायेन कल्पनामात्रत्वान्निरवयवं प्रत्यापकं शब्दतत्त्वं जातिव्यक्तिभेदेन भिन्न-स्फोटस्वरूपमेवाङ्गीकार्यम्। गौरयमर्थ इति च वाचकाऽभेदनवाच्य-प्रतीतेस्तदध्यासगोचरीकृतोऽर्थो व्यवहार्यः। एवं शब्दजात्यध्यासगोचरी कृताऽर्थजातिः शब्दवाच्या। मुख्यं तु शब्दवाच्यत्वं शब्दजातावेवेति ध्येयम् इति।

———

## १८—जातिपदार्थवादे प्रतिनिधिव्यवस्था

इह जातिपदार्थवादेऽस्ति मतद्वयम्। तथा हि—केषाञ्चिज्जातिवादिनां जातिशक्त्योरेवार्थसमवायाच्छक्तेः शब्देन प्रतिपादने जातिरूपलक्षणम् (उपायाः) इति मतम्। अन्येषां मते तात्पर्येण जातिरेव शब्देन प्रतिपाद्यते कार्ययोगस्तु तस्याः क्वचित्साक्षात् 'गां पश्येत्यादौ" क्वचिद् व्यक्तिद्वारेणेति मतम्। अथवा ये साधनजात्यभिधायिनः शब्दास्तेषां जात्यभिधायित्वेऽपि शक्त्यभिधाने तात्पर्येण जातेरुपलक्षणत्वान्नान्तरीयकमुपादानम् कारकशक्तिवाचिन्या विभक्तेः केवलाया अप्रयोगार्हत्वात्। ततश्च प्रातिपदिकस्याऽवश्यमुपादानमिति तद्वाच्यया जात्या सतिसम्भवे शक्तिरवच्छिद्यते खदिरे बध्नाति इत्यादौ।

खादिरालाभे तु तत्सदृशनिष्ठकदरत्वजातिसहचरिताऽपि शक्तिर्गृह्यते। शक्तितात्पर्येण प्रागुक्तविधिचोदनात्। अत्र हि वाक्यार्थभूतया बन्धनक्रियया स्वसाधनमात्रस्याक्षेपे सिद्धे खदिरत्वजातीयप्रतिपत्त्यर्थं, "खादिरे बध्नाति" इति साधनश्रुत्युपादानेऽपि खदिरत्वजातेरसम्भवे बन्धनक्रियासाधनशक्त्यावेदनपरतया खदिरत्वजातिबोधकशब्दप्रयोगान्माभूत्प्रधानभूतायाः शक्तेरपि त्यागे बन्धनक्रिया या असम्पत्तिरिति अन्यजातीयकदरद्रव्य गताऽपि शक्तिः शिष्टाचारात्परिगृह्यते। चोदितप्रतिनिधिविषये एवैतस्य न्यायस्येष्टत्वाच्च नाभ्रमयादौ बन्धनक्रियाऽतिप्रसङ्गः।

एवञ्च गोदोहादि चोदनासु न महिष्याद्याक्षेपप्रसङ्गः। महिष्यादिषु चोदितसामर्थ्याऽभावात्। जातेः शक्त्युपलक्षणत्वाच्च सा साधननियमं न विधत्ते। यथा—काकेभ्यो दधि रक्ष्यताम् इति दध्युपघातकनिवारणपरे वाक्ये काकस्य तदुपलक्षणत्वात्सदृशविडालाद्युपादाने श्रौतार्थस्यागो न भवति। यत्र च सम्भवश्चोदितस्यार्थस्य तत्र श्रुतिः (शब्दः) सफला तस्मात्खादिरे बध्नाति पालाशे बध्नाति इत्यादौ खादिरादेर्बन्धनसमर्हस्यालाभेतत्सदृशकदादिरूपशक्तसाधनपरिग्रहो युज्यते।

अनाधारायाः शक्तेरसम्भवात् । नान्तरीयकत्वेन जातेरुपादानम् । नियमस्याविधानात् । जातेः शक्त्युपलक्षणत्वेन कार्ययोगित्वाऽभावाच्च तदाश्रयस्याऽशक्तत्वेतत्परित्यज्य द्रव्यान्तरगताऽपि शक्तिगृ ह्यते । यदि तु तज्जातीयमेव शक्तं स्यात्तदा सन्निहितपरित्यागे कारणाभावात् तज्जातीयमेवोपादीयते । तदशक्तत्वे तु उपलक्षणस्योपलक्षणक्रियायां चारितार्थ्यात् अन्यस्यापि तत्कार्ययोगे तदुपलक्षिता शक्तिः शास्त्र-चोदितैव भवतीत्यर्थान्तरगताऽपि अपर्युस्तत्वात् ( अप्रतिषिद्धत्वात् ) उपादीयते इति कृत्वा जातिनियमो नास्ति इत्येवं सदृशार्थान्तरगताऽपि शक्तिगृ ह्यत इति नाऽचोदितप्रतिनिधिपरिग्रहप्रसङ्गरूपो दोष इति । तदेतदुक्तं वाक्यपदीये—

केषाञ्चित्साहचर्येण जातिः शक्त्युपलक्षणम् ।
खदिरादिष्वशक्तेषु शक्तः प्रतिनिधीयते[1] ॥ इति ॥

ननु येषां जातिवादिनां मते तात्पर्येण जातिरभिधेया न शक्त्युप-लक्षणं तेषां मते कथं प्रतिनिधिरुपपद्यते इति चेदुच्यते । खादिरेबन्धनरति इति अस्वातन्त्र्यफलकस्य बन्धनस्य विधानात् जातेस्तात्पर्येण शब्दप्रति-पाद्यत्वेऽपि च अस्वातन्त्र्यप्रयोजनकबन्धनविधिसामर्थ्यात् शक्तिहीनस्य खदिरादेस्त्यागे शक्तं कदरादि प्रतिनिधिः क्रियते । वाक्यार्थत्वेन प्रधान-भूता हि बन्धनक्रियेतितत्सम्पादनशक्तस्य पदार्थस्य परिग्रहो न्याय्यः । ननु अदृष्टफलायाः क्रियाया अनुरोधस्य साधनान्तरसंभवेनावश्यकत्वेऽपि दृष्टफलाया बन्धनक्रियायाः कोऽनुरोधः साधनान्तरस्यापि संभवात् इति चेदुच्यते । यथाऽवदानग्रहणादिरूपदृष्टफलकं प्रमाणादि-( हिंसा प्रारम्भादिकम् ) गामालभेत इत्यादि वाक्येन चोदितम्, तथा तदङ्ग-भूतो बन्धिरपि इति सर्वथा तदनुरोध आवश्यकः । तथा हि असति पशोर्यूपे बन्धने हिंसाद्यनुपपत्ता अवदानग्रहाद्यभावात् स्वर्गफलकस्य यजेरेवासंपत्तिः स्यादिति तदनुरोधात्तदङ्गसंपत्यर्थतरसमुचितसाधना-क्षेपः । तदुक्तं वाक्यपदीये—

---

१. ( वा० प० तृ० का० जा० स० ३।१।३ ) ॥ इति ॥

अस्वातन्त्र्यफलो बन्धिः प्रमाणादि विशिष्यते ।
अतो जात्यभिधानेऽपि शक्तिहीनं न गृह्यते[1] ॥

अयमत्र जातिपदार्थवादिनां प्रागुक्तपक्षद्वयेऽप्याशयः । यदि नाम प्रकृत्यर्थभूतायाः जातेः प्रत्ययार्थकारकशक्त्यवच्छेदकत्वेनोपात्ताया असंभवः, तज्जात्यवच्छिन्नस्याऽशक्तत्वात्, तथापि अतच्छेद्याया अपि प्रत्ययार्थभूतायाः शक्तेस्त्यागो न युक्तः अपितु चोदितादन्यगताऽपि सा गृह्यते ।

माभूत्तद्वाचिनः पदस्यानर्थक्यम् । वाक्यार्थस्य च क्रियायाः-प्रागुक्तरीत्या सम्पत्तिर्माभूदिति गामलभेतेत्यादौ सर्वत्रैव शक्तव्यक्ति विषयैव सर्वापि क्रियाऽवतिष्ठते इति प्रतिनिधावपि संभ्रमो न कार्यं इति । किञ्च जातिपदार्थवादे लिङ्गेनापि प्रतिनिधिरुपपद्यते । तदुक्तं वाक्यपदीये—

संश्लेषमात्रं बध्नातिर्यदि स्यात्तु विवक्षितः ।
शक्त्याश्रये ततो लिङ्गं प्रमाणाद्यनुशासनम्[2] ॥

अयं भावः—यदि संश्लेषमात्रं संश्लेषो यूपे पशोर्योजनम्, तदेव यदि अस्वातन्त्र्यरूपफलानपेक्षं तदा संश्लेषमात्रम्, तद् यदि बन्धधात्वर्थोऽ-भिमतः स्यात्तदा तस्य लतारूपेणापि खदिरेण सम्पाद्यत्वसम्भवे कदररूपप्रतिनिध्युपादाने सामर्थ्यं नास्तीति संश्लेषादुत्तरकालं पशुमालभेत, हृदये बध्नाति अथ वक्षसि इत्यादि वचनैः प्रमाणादीनां (हिंसादीनाम्) यदनुशासनम् (उपदेशः) तदत्र प्रमाणाद्यनुकूल बन्धनसमर्थद्रव्योपादानेऽनुमानरूपं लिङ्गम् । अथवा पूर्वव्याख्याने बन्धिरेव तत्रार्थे लिङ्गमासीत् इदानीं यदि संश्लेषमात्रं बध्नाति ततः प्रमाणाद्यनुशासनं तत्र लिङ्गमिति भावः ।

अत्र हि पशुविशसनाङ्गस्य बन्धधात्वर्थस्योपादानं युक्तम्, यस्तु बध्नात्यर्थे न विशसने समर्थः स न तदङ्गमिति एकप्रकरणोपात्त-

---

१. (वा॰ प॰ तृ॰ का॰ जा॰ स॰ ३।१।१४) ॥ इति ॥
२. (वा॰ प॰ तृ॰ का॰ जा॰ स॰ ३।१।१५) ॥ इति ॥

प्रमाणाद्यर्थ ( हिंसाद्यर्थपर्यालोचना ) लभ्यः समर्थखदिरालाभे समर्थकदरादिरूपः प्रतिनिधिः।

प्रतिनिधिपरिग्रहेऽन्योपि दर्शनभेदो वाक्यकाण्डे प्रतिपादितः। असम्भवनियमत्यागो नियममात्रबाधश्चेति। तथा हि—व्रीहिभिर्यजेतेत्यत्र देवतोद्देशेन द्रव्यस्यागस्य यद् धात्वर्थत्वाद् यागक्रियैव देशभावापन्नं द्रव्यमात्रं यजेतेति पदादेव सामर्थ्यात्प्राप्तम्। द्रव्यदेवतारहितस्य त्यागमात्रस्य यज्धात्वर्थत्वाऽसंगत्वात् प्रतीते तस्मिन्नर्थसामर्थ्यादनन्तरद्रव्याक्षेपस्यायोगाद् यजेतेति श्रुतिप्राप्तसंनिधानमेव द्रव्यमात्रम्। इत्थं चाख्यातस्य क्रियाप्रधानत्वेऽपि तदेकदेशभूतं साधनाधारमपि द्रव्यसामान्यं श्रुतिप्राप्तसंनिधानं शब्दमेव। तत्राऽविरुद्धो कार्यसमवायेन व्रीहिभिरिति चोदितेन व्रीहित्वरूपेण विशेषणेतर द्रव्यव्यावृत्तिरूपः परिपोषः। निर्विशेषस्य सामान्यस्याभावात्। अध्यावापार्था हि व्रीहि श्रुतिर्यजेतेति शब्दसामर्थ्यप्राप्तं द्रव्यत्वमात्रं न बाधतेऽविरोधात्।

द्रव्यत्वमात्रं हि श्रुतिसामर्थ्यप्राप्तम्, व्रीहित्वतु अर्थसामर्थ्यप्राप्तम्। निर्विशेषस्य सामान्यस्याभावात्। एवञ्च द्रव्यत्वमात्रस्य श्रुत्यङ्गत्वचोदितं न व्रीहित्वस्य विशेषस्येति तदसम्भवे विशेषान्तरेणापि नीवारादिना द्रव्यत्वसामान्यस्य परिपोषे प्रतिनिधिविषये चोदितस्य बाधा न भवति। ननु चाध्यावापे व्रीहिभिर्द्रव्यत्वस्याबाधितत्वाद् विकल्पः सर्वत्र प्राप्नोति व्रीहिभिर्यवैर्वा इत्यादि। साधारणं हि सामान्यरूपं द्रव्यत्वश्रुतिसामर्थ्यप्राप्तम्। तस्य चेद् व्रीहि श्रुत्या गोधमादिरूपाद् विशेषान्तरादवच्छेदो न क्रियते तदा तदपि विशेषान्तरं तेन स्वीकृतं प्राप्तसंनिध्येवेति विकल्पप्रसङ्गः। तथा च व्रीहिश्रुतेरानर्थक्यमनवच्छेदकत्वात्।

अत्रोच्यते। इह व्रीहित्वेन द्रव्यत्वे विशेषितेऽर्थसामर्थ्याद्यवत्वादीनामसम्भवः। न हि यत्र व्रीहित्वैकार्थसमवायितद्रव्यत्वं तत्रैव यवत्वैकार्थसमवायि सम्भवति। ततश्चायमसम्भवनियमो नाम।

द्विप्रकारो हि नियमः। कश्चित् शब्दसामर्थ्यायातो भवति यत्र पक्षे प्राप्तो सत्यां श्रुतिः। यथा व्यक्तौ पदार्थे विप्रतिषेधे परमिति। कश्चित् पुनरसत्यपि शब्दव्यापारे पदार्थानामितरेतररूपसांकर्याभावात् एकचोदना तदन्यनिवृत्तिफलेतिपदार्थस्वरूपविमर्शायातो सम्भवनियम इत्युच्यते। तथा चेह शब्दसामर्थ्यायातं द्रव्यत्वमिति व्रीहिभिरिति तत्राध्यावापः शब्दव्यापारः। अखण्डो वाक्यार्थ इति नयेऽपि अपोद्धारदशामादाय भेदसंसर्गादिविकल्पः। तत्र व्याडिमते भेदो वाक्यार्थं इति। पदवाच्यानां द्रव्याणां द्रव्यान्तरनिवृत्तितात्पर्येणाभिधेयत्वात्।

जातिवादिनो वाजप्यायनस्य मते तु संसर्गो वाक्यार्थः। सामान्यानां पदार्थानां संश्लेषमात्ररूपत्वाद्वाक्यार्थस्य। इत्यपि चरितार्थे व्रीहि शब्दे व्रीहित्वस्य यज्ञत्वादिभिर्विरुद्ध एकस्मिनर्थे संबन्ध इति तत्र तानि निवर्तन्ते। ततश्च प्रतिनिधौ वस्तु सामर्थ्यायातस्य नियमस्य बाधेपि शब्दस्य द्रव्यत्वमात्रस्याऽबाधिकत्वान्न चोदितार्थत्यागः।

ननु निर्विशेषस्य सामान्यस्य सम्भवाद् यजिनाविशेषनिष्ठमेव द्रव्यत्वमाक्षिप्तमिति सर्वविशेषाणां श्रुतिसामर्थ्ये प्राप्तत्वाद् व्रीहिभिरिति पुनः श्रुतिर्नियमफलैवश्रौतेनापि रूपेण सजातेति कथं न श्रोतार्थत्यागः प्रतिनिधौ इति प्राप्ते उच्यते।

नैतन्न्याय्यम्। न हि शब्दो वस्तुचिन्तामनुसरति। कस्यचिदेव वस्तुभागस्य शब्दव्यापारविषयत्वात्। तथा च यजति शब्दस्य द्रव्यमात्राक्षेपे एव सामर्थ्यं न तु तद् विशेषे। अन्यथा निर्गुणस्य द्रव्यस्यासम्भवात् गुणस्याप्याक्षेपकोऽसौ किमिति न वर्ण्यते? तस्माद् द्रव्यत्वमात्रस्यैवाक्षेपः शाब्द इति तत् परिपोषाय विशेमान्तराऽवापो न नियमफल इति शास्त्रेण पर्युदस्तानां विशेषान्तराणां प्रतिनिधित्वसिद्धिः। तदित्थमसम्भवनियमत्यागो वर्णितः। नियमात्रबाधश्चाप्युच्यते।

इह सर्वत्रैव क्रियाप्रधानो वाक्यार्थः। तया च स्वसिद्ध्यर्थं योग्य-द्रव्यमाक्षिप्यते साधनम्। तदेव च पदान्तरेण विशिष्टं कथ्यते। एवं स्थिते यत्र श्रुतस्य साधनस्याऽसम्भवस्तत्र प्रधानभूतक्रियासम्पत्त्यर्थं साधनान्तरं-प्रतिनिधीयते। क्रिया हि न प्रतिनिधीयते प्राधान्यात्। क्रियान्तराश्रयणे च कर्मान्तरस्य चोदितस्याऽनुष्ठानाच्छास्त्रार्थोल्लङ्घनं स्यादिति गुणभूतस्य साधनस्यैव प्रतिनिधिराचरितः शिष्टैः।

तत्र च प्रधानभूतक्रियापदार्थाक्षिप्त्यशास्त्रचोदितस्य साधनामात्रस्य न त्यागः, अपितु व्रीह्यादि पदोपात्तस्य द्रव्यविषयस्य नियममात्रस्य बाधः। स च न दोषाय, शक्तिमात्रस्य साधनरूपस्य क्रियासामर्थ्या-क्षिप्तस्य प्राधान्याच्छास्त्रचोदितस्योपात्ताधाररूपद्रव्याभावे तदपरत-दाऽधारभूतद्रव्योपादानेऽपि तस्याऽपरित्यागाच्चोदितार्थोल्लङ्घनाभावात्। तदेवं जातिपदार्थवादे प्रतिनिध्युपपत्तिर्दर्शिता वाक्यपदीये हेलाराजीये च।

---

## १९—केवलया जातेः शब्दाभिधेयत्वोपपादनम्

ननु जातिरेव पदार्थं इत्यवधारणं नोपपद्यते। जातेः स्वाश्रय-समवाऽयियोगात्। अतएव चासां कार्यसिद्धेः कारणानामाश्रयेषु प्रतिनिय-तेषु भाव इत्याश्रयादुत्कर्षयितुमशक्या जातिः केवला व्यक्तिकजं कथं शब्देनाभिधीयते ? इत्याशङ्क्य दृष्टान्तेनैतदुपपादितं वाक्यपदीये हेलाराजीये च।

यथा जलादिभिर्व्यक्तं मुखमेवाभिधीयते।
तथा द्रव्यैरभिव्यक्ता जातिरेवाभिधीयते[1]॥

---

१. (वा० प० तृ० का० जा० स० ३।१२९॥ इति॥)

अयमर्थः — यथामुखादिप्रतिबिम्बमादर्शादौ भ्रान्त्याऽपि दृश्यमानमादर्शादिव्यञ्जकसंनिधानेऽपि आदर्शादिव्यञ्जकरहितं शुद्धमेव मुखशब्दाभिधेयम्। एवं शब्दोऽपि जातेर्व्यक्तिवियोगेऽपि जातिमेव केवलामभिधत्ते न तु व्यक्तिमशब्दस्वाभाव्यात्।

अयं भावः। जातेराश्रयसमवायवियोगेऽपि तस्याभेदाभावात्सर्वत्र जातावेव संकेतोपपत्तौ सैव शुद्धा शब्दाभिधेया, शब्दे ज्ञाने तथा प्रतीतेः। ऐन्द्रियकेतु ज्ञाने विवेकानवधारणाद् भवतु जातिव्यक्त्योः संमूच्छिताऽवभासः। शब्दस्य तु यथा संकेतं प्रतीतिहेतुत्वेन काचित् क्षतिरिति।

———

## २०—शब्दानभिधेयानामपि व्यक्तीनां शाब्दबोधे जातिविशेषकत्वम्।

ननु शब्देनानभिधीयमाना व्यक्तयः कथं शब्दज्ञानविशेष्यतया जातीर्विशिष्युरिति चेच्छ्रूयताम्। उक्तं वाक्यपदीये—

यथेन्द्रियगतो भेद इन्द्रियग्रहणादृते।
इन्द्रियार्थेष्वदृष्टोऽपि ज्ञानभेदाय कल्पते[1]॥
तथात्मरूपग्रहणात् केषाञ्चिद् व्यक्तयो विना।
सामान्यज्ञानभेदानामुपयान्ति निमित्तताम्[2]॥

अयमर्थः —

शब्दाद्युपलब्ध्यन्यथाऽनुपपत्त्या श्रोत्रादीनामिन्द्रियाणां सत्त्वमनुमीयते। अनुमितसत्त्वानि च तानि नित्यपरोक्षत्वात् अनुपलभ्यमानस्वगतचक्षुः श्रोत्रादिविशेषाणि शब्दस्पर्शरूपरसगन्धेषु इन्द्रियार्थेषु चाक्षुषादिप्रत्ययविशेषहेतुभावं नियमेन प्रतिपद्यन्ते। नहि चाक्षुषं ज्ञानं

---

१. ( वा० प० तृ० का० स० ३।१।३० )॥ इति॥
२. ( वा० प० तृ० का० जा० स० ३।१।३१ )॥ इति॥

श्रोत्रेन्द्रियकार्यम्। एवमगृह्यमाणस्वरूपा व्यक्तयः। शब्देनाभिधान-वेलायां केषाञ्चिदेव सामान्यज्ञानभेदानां काश्चन व्यक्तयः शब्दापि प्रत्यक्षप्रत्ययानामिव हेतुतामुपयान्ति। शाब्दे प्रत्यये शब्दार्थभूतानां सामान्यानां वस्तुतः समवायनियमाद् विशेषमावेदयन्ति इति न सांकर्यं शब्दार्थे। अगृह्यमाणस्यापि तदानीं व्यक्तिरूपस्यान्यदाप्रत्यक्षकाले-गृहीतत्वादगृहीतशक्तिकस्यापि तद्विषयत्वावसायेऽविरोधात्। संप्रत्य-गृह्यमाणस्यापि दृष्टं प्रतीतिविशेषहेतुत्वमित्येतावतासाम्येनात्रेन्द्रियाणि दृष्टान्ततयोपात्तानि। तदेवं शब्दानभिधेयानामपि व्यक्तीनां शाब्दे प्रत्यये विशेष्यतया जातिविशेषविशेषकत्वं वाक्यपदीये हेलाराजीये च समर्थितं द्रष्टव्यम्[1]।

---

## २१.—ब्रह्मरूपायाः सत्ताया एव क्रियाद्रव्यभेदेन विवर्तद्वयम्।

ब्रह्मस्वरूपभूता सत्तैव क्रियारूपेण द्रव्यरूपेण च विवर्तते इत्युक्तं वाक्यपदीये —

प्राप्तक्रमा विशेषेषु क्रियासैवाभिधीयते।
क्रमरूपस्य संहारे तत्सत्त्वमिति कथ्यते[2]॥

अयमर्थः—विशेषेषु पाकादिक्रियाविशेषेषु व्यक्तिस्थानीयेषु साधनव्या-पारवशात् क्रमवत्सु सत्सु तद्गता सत्ताऽपि प्राप्तक्रमाऽक्रमापि क्रमवत्त्वेन भासमाना सैव सत्तैव क्रियाभिधीयते। साधनव्यापारोपसंहारवशाद् व्यक्तिस्थानीयेषु क्रियाविशेषेषु क्रमरूपस्य संहारे तु अक्रमत्वेन स्थिता सत्तैव सत्त्वं द्रव्यमिति कथ्यते व्यवह्रियते शास्त्रे।

अयं भावः। तिङ् प्रत्ययसमभिव्याहारे पाकादिक्रियावाची पचादि-धातुः भावकृत्प्रत्ययसमभिव्याहारे सत्त्ववाचिताम् (द्रव्यवाचिकत्वम्)

---

२. (वा० प० तृ० का० जा० स० हे० रा० टी० ३।१।३१ ॥इति॥
१. (वा० प० तृ० का० जा० स० ३।१।३५ ) ॥ इति ॥

उपगच्छति। साधनेषु क्रियासत्त्वे च व्यक्तिस्थानीयेषु पाकादिक्रिया-विशेषेषु पौर्वापर्यरूपक्रमसत्त्वे तद्गता सत्तैव सक्रमत्वेन भासमाना सकलधातुवाच्या क्रिया। तस्या एवान्तरो धात्वर्थभेदः पाकादिक्रिया-विशेषरूपः। प्रागुक्तरीत्या साधनसम्पर्कहेतुकस्य तस्या क्रमेणाप्ततायमानरूपस्या परामर्शे तु सत्तैव सत्वं द्रव्यमित्युच्यते इति सिद्धसाध्यरूपो द्विधाविवर्तः सत्तामात्रस्वरूपस्य ब्रह्मणः परस्य प्रतिपादितः।

ब्रह्मरूपं सत्वमेवहि सर्वत्रानुगतम्। न चात्र दर्शने सद्भ्यः सर्व-भावेभ्यः सत्ता व्यतिरिक्ता स्वभावत इति सर्वं सत्तारूपं ब्रह्मस्वरूपम्। एवं द्रव्यवाचकानां क्रियावाचकानाञ्च सर्वशब्दानां सत्तावचनत्वा-ज्जातिः पदार्थ इति पक्षः सर्वान् शब्दान् व्याप्नोति। यद्यपि च द्रव्य-पदार्थेऽपि उपाधिभेदभिन्नस्य ब्रह्मद्रव्यस्याभिधानमुक्तं वाक्यपदीये तात्पर्यभेदावस्थाऽभेदः सत्तारूपस्य ब्रह्मणः। तथा हि जातिपदार्थे जात्यात्मना सर्वंवान्वयिरूपं ब्रह्मविवक्षितम्। द्रव्यपदार्थनये तु परि-निष्ठितरूपं परमार्थतयेति दर्शनविकल्पः। अयमेव च पक्षद्वयेऽपि एकपक्षी-भावरूपः सिद्धान्तः परमार्थदृष्ट्या। व्याकरणशास्त्रस्य च सर्वपार्षदत्वा-दत्राद्वैतदर्शनोपन्यासो वाक्यपदीये कृतः। सर्वत्रैव च वाक्यपदीये पदार्थ-चर्चाविषये ब्रह्मदर्शननयेनैव संबन्धादिविचार उपसंहृत इति।

---

## २२—षड्विधो भावविकारः सत्ताविवर्त एव।

समग्रः क्रियाकलापः सत्तारूपस्य ब्रह्मणो विवर्त एवेति निरुक्तकार-मतम्। तत्रैव च हरेरपि सम्वादः। तदुक्तम् :—

सैव भावविकारेषु षडवस्थाः प्रपद्यते।
क्रमेण शक्तिभिः स्वाभिरेवं प्रत्यवभासते[1] ॥इति॥

---

१. (वा० प० तृ० का० जा० स० ३।१।३६) ॥ इति ॥

अयमर्थः—सैव सत्तैव भावविकारेषु—भावानां विकारेषु जायमानेषु स्वाभिः शक्तिभिः क्रमेण षडवस्था जन्मसत्तादिकाः प्रपद्यते प्राप्नोति। किञ्च एवं षडवस्थावत्त्वेन प्रत्यवभासते चेति।

अयं भावः—षड्भावविकाराः भवन्तीति ह स्मा ह भगवान् वार्ष्यायणिः इति निरुक्तकारः। तत्र च भावस्य परमार्थरूपस्य सत्तात्मकस्य ब्रह्मणो जन्मादयो विकारा भाव-विकारेषु इति पद्यस्थपदस्यार्थं इति हेलाराजः। सन्मात्र स्वरूपा हि सत्तोत्तरोत्तरविकाराऽपत्तौ जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यति, इति व्यपदेशमासादयति। सत्तायाश्च प्रथमतरं सन्मात्रं रूपमस्ति शब्देन नाभिधीयते अपितु जन्मोत्तरकालादिभावि तस्या अवस्थाविशेषः सत्तारूपस्ते-नाभिधीयते। जन्मान्तरभावि हि तस्या रूपं घटादिकं लोके सदिति व्यवहार्यं भवति। असमाच्च व्यवह्रियमाणादवस्थाविशेषात् प्राक् पश्चात् भाविन्यः पुनरावस्था जन्मविपरिणामादिरूपेण व्यवहार्यास्ति-थापि—वस्तुतोनिर्विकाराऽपि सत्ता ब्रह्मरूपाऽविद्यारूपस्वशक्तिमाहात्म्यात्पूर्वं जायते इत्यवसीयते। पश्चादस्तीति। अवस्थितस्य च विकारापत्तिध्रुवेति विपरिणमते। तच्च विपरिणमन्मुहूर्तमपि नावतिष्ठते इति यावदनेन वर्धितव्यं तावद् वर्धते। ततो मुहूर्तमप्यनवस्थानादेवापक्षीयते। ततोऽपि विनाश इत्येवं क्रमस्थितिः। एवंभूताश्च तस्याः काश्चन शक्तयो विद्यन्ते येनैकैव सती सा तथा तथा विचित्रेण रूपेण प्रतिभासते।

न च सत्तायाः परिणामदर्शनाभिप्रायेणायं विकारशब्दः, तस्या अनित्यत्वप्रसङ्गात्। अपितु विवर्तपर्यायोऽयं विपरिणामशब्दः। तथा हि सर्वशक्त्यात्मभूतस्य ब्रह्मणोऽनेकविकारप्रदर्शनसामर्थ्यरूपाऽविद्याख्याऽशक्तिः कार्यभेदात्कल्पितनानात्वासम्यगस्ति इत्यागमविदो वदन्ति।

एवञ्च स्वाभिः शक्तिभिः स्वस्मादविद्यातश्चाव्यतिरिक्ताभिर्जन्मादिरूपतया सत्तैवाऽऽभासते तदेव ब्रह्म सत्तात्मकं सर्वभावेषु समानरूपमन्यस्य तद्व्यतिरिक्तस्याऽऽभावादिति।

———

## २३—क्रमाऽख्या कालशक्तिरपि ब्रह्मभूतायाः सत्ताया आत्मभूतैव

ननु यदि सत्तैव स्वशक्तिमाहात्म्याज्जन्मादिरूपतयाऽऽवभासते तर्हि कथं न युगपदवभासः? किमिति क्रमेणैवेति। नहि क्रमो नाम कश्चित् क्रियाविशेष इत्याऽशङ्क्य समाहितं वाक्यपदीये कालाख्यापि शक्तिर्ब्रह्मण एव क्रमरूपा। यथा क्रमेणैव जन्मादिरूपतयाऽऽवभासते न युगपदिति। तदुक्तम् :—

आत्मभूतः क्रमोऽप्यस्या यत्रेदं कालदर्शनम्।
पौर्वापर्यादिरूपेण प्रविभक्तमिवस्थितम्[1]॥

अयमर्थः —क्रमोप्यस्याः सत्ताया आत्मभूतो न व्यरिरिक्तः। यत्र क्रमे इदं प्रसिद्धं कालदर्शनम् कालदृष्टिस्तैर्थिकानाम्। तच्च कालदर्शनं कालस्याऽऽप्रविभक्तत्वादप्रविभक्तमपि पौर्वापर्यादिरूपेण प्रविभक्तमिवस्थितम्।

अयं भावः —योऽयं जन्मादिक्रियाणां भावविकाररूपाणां क्रमः सोऽपि आत्मभूतोऽस्याः सत्तायाः। न केवलं ताः क्रिया एव क्रमवत्योऽस्या आत्मभूताः, किन्तु अन्येऽपि क्रमवन्तः सर्वे भावः। क्रमवद्भ्यो व्यतिरिक्तस्य क्रमस्याऽसंचेतनात्। यत्र क्रमे कालं नाम पदार्थान्तरं तीर्थिकाः पश्यन्ति पौर्वापर्यादिरूपेण प्रविभक्तम्।

कालस्य क्रमेण पौर्वापर्यादिरूपेण प्रविभक्तत्वाद् दर्शनमपि प्रविभक्तमिव स्थितमित्युक्तम्। वस्तुतस्तु अप्रविभक्तोऽपि कालः क्रियारूपोपाधिवशात् पौर्वापर्यादिरूपेण प्रविभक्त इव भवति। अतएव घटिकासूचीक्रियाभिर्घण्टामिनटादि व्यवहारोऽद्यापि भवति। आदित्यक्रियया च सूर्यघटीयन्त्रेण प्रविभक्तस्य कालस्य परिज्ञानं भवति। जलविन्दुनिपातरूपया क्रियया च कालपरिच्छेदमादाय घटीपलादिव्यवहारो नक्तंदिवं भवति। ब्रह्मणो हि क्रमाख्या कालशक्तिर्जन्मवत्सु पदार्थेषु

---

१. (वा० प० तृ० का० जा० स० ३।१।३७)॥ इति॥

जन्मादिक्रियाद्वारमेव पौर्वापर्येणावभासोपगमविधायिनी भवति नत्वपरो द्रव्यभूतः कालोऽस्तीति । तदुक्तं वाक्यपदीये ब्रह्मकाण्डे--

अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः ।
जन्मादयो विकाराः षड्भावभेदस्य योनयः[1] ॥इति॥

---

## २४—भावानां नास्तित्वमपि सत्तैव

ननु—

नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिरिति[2] ॥

गीतोक्तरीत्या जन्मनाशाववस्तुत्वात्कथं सत्तात्मकौ स्यातामित्याशंक्य समाहितं नाशस्य सत्तात्मकत्वं वाक्यपदीये—

तिरोभावाभ्युपगमे भावानां सैव नास्तिता ।
लब्धक्रमे तिरोभावे नश्यतीति प्रतीयते[3] ॥

अयमर्थः—भावानां तिरोभावाभ्युगमे सैव नास्तिताऽभावो नाश इति । सिद्धरूप उच्यते । तिरोभावे साध्यरूपे लब्धक्रमे सति तु घटो नश्यतीति प्रतीयते इति । अयं भावः—अपायोपजनरूपविकारशून्यत्वाश्रित्या ब्रह्मात्मिका सत्ता कारणेषु निरन्वयविनाशासहेत्यपायो नाम न प्रतियोगिनो भावाद् व्यतिरिक्तः । केवलं भावानामुत्पत्तेः प्रागूर्ध्वंञ्च भावावभासस्य तिरोभावमात्रं यदस्माभिरभ्युपगम्यते सैव नास्तिता कथ्यते । सत्तैव तु पूर्वं कारणसामग्रीसमवधाने कार्यरूपेण विवृत्ता पश्चाद् विनाशसामग्रीसमवधाने तिरोभूय स्वकारणेषु शक्तिरूपतयाऽऽत्रस्थिता वस्तूनां नाशो न तु निरूपाख्योऽभावरूपोऽसौ, नाभावो विद्यते सत इति निषेधात् ।

---

१. ( वा० प० प्र० ब्रह्म० का० १।१।३ ) ॥ इति ॥
२. ( गी० अ० २ श्लोक १६ ) ॥ इति ॥
३. ( वा० प० तृ० का० जा० स० ३।१।३८ ) ॥ इति ॥

समस्तेषु च भावेषु तिरोभूतेषु उपसंहृतक्रमः सिद्धरूपस्तिरोभावो नाश इत्यादिनामपदप्रत्ययाभ्यः। यदा तु तिरोभावावस्थारूपा सैव नास्तिता, साधनसम्बन्धवशात् प्रतीयमानस्वभावसाध्यरूपाविवक्षिता तदा नश्यतीत्याद्याख्यातवदप्रत्याय्या। पूर्वावस्था अवक्षीयते अपक्षीयते इत्युच्यते तदुत्तरा तु विनश्यति इति द्वौ भावविकारौ प्रातिलोम्येन परिणामरूपौ। तत्र च भवनधर्मवतो भावस्याऽभवनविरोधात्तिरोभावमात्रं विनाश इति भावरूप एवेति रीत्या भावानां नास्तित्वमपि सत्तैवेति सिद्धम्।

---

## २५—भावानां जन्मापि सत्तैव

तदुक्तं हरिणा—

पूर्वस्मात्प्रच्युता धर्मादप्राप्ता चोत्तरं पदम्।
तदन्तराले भेदानामाश्रयाज्जन्म कथ्यते[1] ॥ इति ॥

अस्यार्थः—उपादानकारणे शक्तिरूपेणावस्थानाख्यात्पूर्वधर्मात्प्रच्युता, उत्तरपदं कार्यरूपेणाभिव्यक्तिनिष्ठारूपमप्राप्ता सत्ता गृहीतक्रमा कार्याभिमुखा उत्तरोत्तरावस्था विशेषमासादयन्ती जायते इति व्यवह्रियते।

न त्वसतएवोत्पादो जन्म। तद् यथा न सतोऽत्यन्तं विनाशः तथा जन्मापि नाभूतपूर्वस्याविर्भावः। तदुक्तं हरिणैव स्वयम्। "नाभावो जायते भावो नैति भावोऽनुपाख्यातम्"। इति। अत एव च कार्यकारणयोरवस्थाविशेषरूपतया भेदेऽपि वस्तुतोऽभेदाद् अंकुरो जायते बीजमंकुररूपेण जायत इत्यादौ यथाविवक्षं जनिक्रियाकर्तृत्वोपपत्तिः। प्रागुक्तपूर्वापरावस्थान्तरालवर्तिक्षणपरम्पराक्रमविवक्षायामेव च जनिक्रियान्वयो न परिनिष्ठिताऽवस्थायाम्। तदुक्तं हरिणा—

पूर्वामवस्थामजहत्संस्पृशन् धर्ममुत्तरम्।
संमूर्च्छित इवार्थात्मा जायमानोऽभिधीयते[2] ॥ इति ॥

---

१. ( वा० प० तृ० का० जा० स० ३।१।३० ) ॥ इति ॥
२. ( वा० प० तृ० का० साधन० स० ३।७।११८ ) ॥ इति ॥

अत्र पूर्वावस्थापदेन कारणे शक्तिरूपेणावस्थानमुच्यते। उत्तरधर्म-पदेन च कार्यावस्था। पूर्वापरावस्थे संस्पृश्यास्थितोविस्तृत इवेति संमूर्च्छित इवेत्यस्यार्थः। अंकुरो जायते इत्यादौ उत्तरावस्थायाश्च पूर्वावस्थासु समारोपात्कर्तृत्वम्।

व्यापृतं हि कारकं पश्यन्तो जायते इति व्यवहरन्ति। कारक-व्यापारावसाने तु अस्तीति जन्मोत्तरकाला सत्ता व्यवह्रियते। ततोऽपि धर्मान्तराविर्भावोन्मुखत्वे विपरिणमते इति। तत्रापि वृद्धौ वर्धते इति जन्मविशेषा एवैते पृथगुपात्ताः। तदयं भावस्यानुलोम्येन परिणामः। तदेवं भावरूपेण विवृत्ता सत्तैव स्वविवर्तक्रियान्वयिनी। सर्वधातुवाच्यश्च क्रियाविशेष षट्स्वेव भावविकारेषु क्रियारूपेषु अन्तर्भवति। तत्रैव च सिद्धरूपतायां द्रव्यत्वव्यपदेशः। सिद्धिर्हि निष्पत्तिरिति ततः पूर्वभाविनी क्रिया नात्यन्तमर्थान्तरभूतेति।

---

## २६—गुणानां प्रतिनिधिर्न जातीनाम्

तदुक्तं हरिणा—

जातीनाञ्च गुणानाञ्च तुल्येऽङ्गत्वे क्रियां प्रति।
गुणाः प्रतिनिधीयन्ते छागादीनां न जातयः[1] ॥ इति ॥

अयं भावः। यद्यपि स्वाश्रयद्रव्यद्वारा द्वावपि जातिगुणौ क्रियाङ्ग-भावमनुभवतः इति तुल्यत्वम्। तथापि तत्र छागादीनां सम्बन्धिन्यो जातयो न प्रतिनिधीयन्ते। छागाभावे मेषो नालभ्यते। अपितु श्वेता-भावे कृष्णोऽपि छाग आलभ्यते इति तु गुणानामेव प्रतिनिधिः प्रसिद्ध इति। अत्र युक्तिरुक्ता हरिणैव—

व्यक्तिशक्तेः समासन्ना जातयो न तथा गुणाः।
साक्षाद्द्रव्यं क्रियायोगिगुणास्तस्माद् विकल्पते[2] ॥ इति ॥

---

१. ( वा० प० तृ० का० जा० स० ३।१।७८ ) ॥ इति ॥
२. ( वा० प० तृ० का० जा० स० ३।१।७९ ) ॥ इति ॥

अयमर्थः—व्यक्तिशक्तेः द्रव्यशक्तेः शक्तस्य द्रव्यस्येत्यर्थः। यथा जातयः समासन्नास्तथा गुणान्। द्रव्यस्य क्रियोपयोगो हि शक्तित्वे एवेति पद्ये शक्तिग्रहणम्। जोऽहि द्रव्योत्पत्तिमारभ्याद्रव्यविनाशं द्रव्येऽन्वयो जातेरधिष्ठानसम्बन्धयोश्चैककालत्वमिति।

द्रव्ये आसन्ना जातिः, गुणास्तु द्रव्यजन्मोत्तरकालभाविन इति कालान्तर परिवासादन्योऽन्यस्वभावपरिणामित्वाच्च द्रव्याद्विप्रकृष्टाः। तथा हि जन्मानन्तरमाम्रफले अम्लो रसः पश्चाच्च पाकजन्यस्तत्रैव मधुरो रसः इत्येवमन्योऽन्यस्वभावपरिणामिनो गुणा अयावद्द्रव्यभाविन इति जातिवन्न द्रव्यस्य संनिकृष्टा किन्तु विप्रकृष्टाः। गुणानां जातिवद् द्रव्ये समासन्नत्वाऽभावेऽपि विकल्पः कथमित्याशङ्क्य समाधत्ते—साक्षाद्द्रव्यं क्रियायोगि, गुणास्तस्माद् विकल्पते इति।

अयं भावः। द्रव्यं साक्षात्क्रियायोगि यदि गुणोऽपि द्रव्यमनपेक्ष्य साक्षात् क्रियायोगी स्यात्तदा न विकल्पेत। यदा तु द्रव्यं साक्षात्क्रियायोगि जातिगुणौ तु तद्द्वारेण तदा प्रत्यासविप्रकर्षयोश्चिन्ता जायते किं द्रव्ये प्रत्यासन्नं किं विप्रकृष्टमिति। तथा हि—द्रव्यं साक्षात् क्रियाशक्तं क्रियासम्बन्धक्षममिति तद्द्वारेण समन्वययोग्यं तत्रासन्नं जातिरूपं न विकल्पते इत्यन्यजातीयस्य न प्रतिनिधिः। अपि त्वन्यगुणस्य। कृष्णोऽपि छागे छागबुद्धेरन्वयात्। जातेरपि प्रतिनिधाने तु अन्यजातीयस्योपादाने न जातेर्द्रव्यस्यात्मकल्पायास्त्यागे सर्वस्यैव साधनभेदात् क्रियाभेद एव स्यात्। नन्वेवं सति कथं खदिरस्य प्रतिनिधिः कदरः क्रियते इति चेन्न। सादृश्यात्तत्र खदिरबुद्धेरनपगमात्। एतच्च जातिपक्षे युज्यते। श्रौतस्य जातिरूपस्य त्यागात्।

द्रव्यपदार्थपक्षे तु जातेरनभिधेयत्वेनोपलक्षणत्वात्तत्त्यागेऽपि नास्ति श्रौतार्थत्याग इति अन्यजातीयस्यापि प्रतिनिधित्वप्रसङ्गः। प्रत्यासन्नतरत्वाज्जातेस्तद्वाची द्रव्यशब्दोऽभिप्रेतो न गुणोपसर्जनद्रव्यवाची। अनिर्धारितरूपस्य हि द्रव्यस्य जातिरात्मरूपनिर्धारणोपयोगिनी स्वात्मप्रदानेनारोपिताऽतदाऽऽकारतां प्राप्नोति। तत्सन्निधौ तु

वस्त्वन्तरत्वाच्चोदितस्य त्यागप्रसङ्ग इति न जातेः प्रतिनिधिरिति। केचित्तु गुणवद् द्रव्यस्यापि प्रतिनिर्धि वदन्ति[1]। तथा हि—यथा द्रव्य-पदार्थपक्षे जातिद्रव्योपलक्षणम्, निर्धर्मकस्यार्थस्याऽव्यवहार्यत्वात्। एवं गुणोऽपि।

तथा जातिवद् गुणोऽपि नीलादिर्नियताऽऽधारको वाय्वाकाशा-देस्तदभावादित्येवं साम्ये सति ये द्रव्यवद् भेद्यत्वाद् गुणमपि द्रव्यलक्षण-प्राप्तत्वादभिधेयं मन्यन्ते तेषां गुणोऽपि जातिवद् द्रव्यद्वारेण क्रिया-सम्बन्धमर्हति इति गुणद्रव्ययोः श्रौतसम्बन्धपरिपोषार्थं वाक्यार्थ-सम्बन्धत्यागेन द्वयोरपि गुणद्रव्ययोः प्रतिनिध्युपपत्तिरिति। तदेतदुक्तं हरिणा—

साम्येनान्यतराभावे विकल्पः केश्चिदिष्यते।
अतद्गुणोऽतश्छागः स्यान्येषो वा तद्गुणो भवेत्[1] ॥ इति ॥

अत्र केश्चिदित्यनेनात्र मतेऽरुचिः सूचिता। द्रव्यप्रतिनिधेर्भाष्य-कारादिभिरनङ्गीकारात् इति।

---

## २७—प्रवृत्तिभेदेन जातेर्द्रव्यसंख्याभ्यां सहयोगायोगौ

तदुक्तं हरिणा—

जातेराश्रितसंख्याया: प्रवृत्तिरुपलभ्यते।
संख्याविशेषमुत्सृज्य क्वचित्सैव प्रवर्तते[2] ॥ इति ॥

जातेः प्रवृत्तिभेदोऽपि हरिणोक्तः—

पराङ्गभूतं सामान्यं युज्यते द्रव्यसंख्यया।
स्वार्थं प्रवर्तमानं तु न संख्यामवलम्बते[3] ॥ इति ॥

१. ( वा० प० तृ० का० जा० स० ३।१।८० ) ॥ इति ॥
२. ( वा० प० तृ० का० जा० स० ३।१।८१ ) ॥ इति ॥
३. ( वा० ग० तृ० का० जा० स० ३।१।८२ ) ॥ इति ॥

अयमर्थः। पशुना यजेत इत्यत्र यागाङ्गभूतं पशुत्वरूपं सामान्यं द्रव्यं द्वारीकृत्य तद्‌गतसंख्यया युज्यते इति नानेकपशुकरणकयागाद-दृष्टसिद्धिः। ब्राह्मणो न हन्तव्य इत्यादौ स्वार्थे प्रवर्तमानन्तु न संख्यामवलम्बते इति न तत्र एकत्वसंख्या विवक्षिता। अतोऽत्र सकल-ब्राह्मणहननप्रतिषेधसिद्धिः इति।

———

## २८—सादृश्यशक्त्योर्जातिरूपत्वम्

एतदुक्तं हरिणा—

अभेदरूपं सादृश्यमात्मभूताश्च शक्तयः।
जातिपर्यायवाचित्वमेषामप्युपवर्ण्यते[1] ॥ इति ॥

अयमर्थः —

व्यक्तीनामनुगतैकाकारप्रतीतिविषयत्वेनाभेदरूपम् अभेदो रूप्यते निरूप्यते येन तत्तथाभूतं यत्सादृश्यम्, व्यक्तीनामात्मभूताश्च व्यक्तिभ्योऽव्यतिरिक्ता याः शक्तयः एषामपि एतद्वाचकशब्दानामपि जातिपर्याय-वाचित्वम्—जातेः पर्यायेणावाचकत्वं कैश्चिदुपवर्ण्यते इति। एवञ्च जातिः सादृश्यम् शक्तिरिति पर्यायशब्दा एवैते एकार्थवाचका इति लब्धम्।

अयं भावः। अनुगतैकाकार प्रतीत्यन्यथानुपपत्त्या जातेः सद्‌भाव-उन्नीयते। सा च व्यक्तिभ्यः पृथग् आत्मानं दर्शयति। तदेता एव व्यक्तयः सादृश्यादेकाकारप्रत्ययप्रसवहेतवः सन्तु यद्वा प्रकृत्यैवैक-प्रत्यवमर्शजननसामर्थ्यादेकत्वाऽध्यासादेकाकारप्रत्ययहेतवः सन्तु किमाभ्यां व्यतिरिक्तेन सामान्येनेत्यभ्युपेत्योक्तं पूर्वार्धेन अभेदरूप-मित्यादिना। ततश्च जातिरेव सादृश्यं शक्तिरित्यपि नामान्तरेणोच्य-ताम् न काचिदनुपपत्तिरिति।

———

१. ( वा० प० तृ० का० जा स० ३।१।९२ ) ॥ इति ॥

## २९-सांख्यनयेनाद्वैतनयेन च शक्तिसादृश्यव्यतिरिक्तजातिसमर्थनम्

तदुक्तं हरिणा —

यदा भेदान् परित्यज्य बुद्धेयक इव गृह्यते।
व्यक्त्यात्मेव तदा तत्र बुद्धिरेका प्रवर्तते[1] ।। इति ।।

अयमर्थः। यदा सर्वेषु कार्येषु एक-कारणानुगमात् तत्परिणाम-भेदान् विवर्तभेदान् वा परित्यज्य व्यक्त्यात्मेवानेकोऽपि बुद्ध्यानुगतैकाकारया सन् घटः सन् पटः सन् मठ इत्यादि रूपया एक इव गृह्यते तदा तत्र सन् सन्निति सर्वकारणसत्ताविषयां एका एकजातीया बुद्धिः प्रवर्तत इति। अयं भावः इह सर्वत्र सन् सन् इति सद्रूपैकवस्तुसमन्वयादेककारणकं विश्वम्। दृष्टो हि कारणाऽनुगमः कार्येषु मृद्घटः सुवर्णं कुण्डलम् इत्यादिषु। कारणेषु शक्तिरूपेण सतश्च कार्यस्य बन्ध्यापुत्रादेरिवालीकस्योत्पत्त्यसंभवाच्च प्रागुत्पत्तेः कारणात्मना कार्यस्य सत्वस्वीकार आवश्यक इति कार्यकारणयोरभेदे सिद्धे सर्वं वस्तु स्वकारणीभूतसद्रूपयत्किञ्चिद्वस्तुभेदाभेदात्मकम्, सन् घट इत्यादि रूपेण सामानाधिकरणप्रत्ययात्।

एकस्यैव सद्रूपस्य परमकारणस्य प्रधानरूपस्य वा स्वपरिणामभूतैर्विवर्तभूतैर्वा तत्तत्कार्यरूपैरनेकधाऽवस्थानादभेदः सामान्यम्, भेदो विशेषः। तत्र च सर्वाभेदो महासामान्यं सत्तारूपं प्रधानं सांख्यमतेऽद्वैतिमते तु ब्रह्म। तस्यैव च तत्तद्व्यक्तिषु गोत्वघटत्वादिधर्मैरवच्छेदादवच्छेदका धर्मा गोत्वघटत्वादयोऽपि अवान्तरसामान्यानि व्यपदिश्यन्ते। अवच्छेदकाश्च धर्मास्तस्यैव व्यक्तिवत्परिणामभूता इति न ततोऽतिरिच्यन्ते। सर्वं हि भावजातमेकस्यैव सद्रूपस्य वस्तुनः सांख्यमते प्रधानस्याद्वैतमते तु ब्रह्मणो यथायथं परिणामो विवर्त इति वा।

एवञ्च कृत्वा कार्यकारणयोर्धर्मधर्मिणोः सामान्यविशेषयोश्च नात्यन्तं भेदः, तथाऽप्रतीतेः। नात्यन्तमभेदः। तथाऽप्रतीतेरेव केवलं

---

१. ( वा० प० तृ० का० जा० स० ३।१।९६ ) ।। इति ।।

स्वपरिचायकपदाभावादगत्या भेदाभेदशब्दाभ्यां यदाऽभिधीयते तदा शब्दसादृश्यमात्रादविवक्षितभेदाभेदाध्यारोपेण परैर्विरोधो निर्विषय एवोपपद्यते। तत्र यदा भेदान् परित्यज्य भेदाभेदरूपाविवक्षया व्यक्तिरूपमेव बुद्ध्या एकमिव गृह्यते तदा तदेव सामान्यमेकबुद्धिविषयः। व्यक्त्यात्मनो हि मूलभूतमेकतत्त्वम् आत्मभेदहेतुपरित्यागादविरुद्धम्। यद्यपि च प्रकृतिरूपान्वयात्सर्वमेकमेव तत्त्वतः तथापि परिणाम-वैचित्र्याद् विकाराणामनर्थान्तरभूतानामपि साव्यवहारिकमनेकत्व-मपगतमिति इव शब्दः। तत्र यदा समस्तभेदपरित्यागः तदा सद्वस्तु-मात्रं पदार्थः इति चैक बुद्धिः प्रवर्तते। धर्मतिरस्कारे च धर्मिमात्रं द्रव्यमिति एकबुद्धिः। सजातीयगतभेदहेतुपरित्यागेऽपि विजातीय-भेदापेक्षायां पृथिव्यापस्तेज इत्यादिव्यवहारः। तत्राऽप्यर्थान्तराद् भेदापेक्षायां स्वसदृशाऽभेदापेक्षणे च गोरश्वोघट इत्यादिभेदव्यवहार-श्चेति यथायथमुदाहार्यमिति।

———

## ३०—वैशेषिकादिदर्शनाश्रयेण जातीनां शक्तिसादृश्य-व्यतिरेकपक्षासमर्थनम्

अत्र विषये उक्तं हरिणा —

दण्डोपादित्सया दण्डं यद्यपि प्रतिपद्यते।
न तस्मादेव सामर्थ्यात्स दण्डीति प्रतीयते ॥
नेच्छानिमित्तादिच्छावानिति ज्ञानं प्रवर्तते।
तस्मात्सत्यपि सामर्थ्ये बुद्धिरर्थान्तराश्रया[1] ॥इति॥

अस्यार्थः। यद्यपि दण्डोपादित्सया—दण्डस्य जिघृक्षया पूर्वं दण्डं प्रतिपद्यते। दण्डप्रतिपत्तेर्दण्डजिघृक्षां प्रतिहेतुत्वात्। जानाति इच्छति यतते चेष्टते इति पौर्वापर्यस्य परस्परं कार्यकारणभावनियामकस्य

---

१. (वा० प० तृ० का० जा० स० ३।१।६३।६४)॥ इति॥

तैर्थिकैरभ्युपगमात्। तथापि तस्मादेव सामर्थ्यात् दण्डप्रतिपत्तिनिष्ठाद् दण्डजिघृक्षां प्रति सामर्थ्यात् स देवदत्तादिर्दण्डीति न प्रतीयते।

किन्तु दण्डप्रतिपत्तिनिष्ठं दण्ठजिघृक्षां प्रति सामर्थ्यमन्यत्। दण्डी इति प्रतिपत्तिं प्रति सामर्थ्यन्तु तन्निष्ठमन्यत् इति। इच्छानिमित्ताद् इच्छावानिति ज्ञानं न प्रवर्तते न जायते। तस्माद् दण्डीति प्रतीतो दण्डप्रतिपत्तेर्विशेषणप्रतिपत्तिमुद्रया सामर्थ्ये सत्यपि दण्डीति बुद्धिरर्थान्तरं दण्डमाश्रयते। एवमिच्छावानिति बुद्धिरिच्छानिमित्त-रूपात्सामर्थ्यादर्थान्तरमिच्छारूपमाश्रयते यथा तथा गौर्गौरित्यनुगतै-काकारप्रतीतिरर्थान्तरगतं सोत्पत्तिसामर्थ्यमेव नाश्रयते किन्तु सामर्थ्यादर्थान्तरं गोत्वजातिरूपमप्याश्रयते इति। अयं भावः। इह गौर्गौरित्यनुगताकारे ज्ञाने परस्परं व्यावृत्ताकाराणां गोव्यक्तीनां हेतुत्वं नोपपद्यते, वैधर्म्यात् इति तादृशं ज्ञाननियामकमनुगतं गोत्वरूपं सामान्यं कल्प्यते। सादृश्यसामर्थ्ये तु धर्मधर्मिणोरभेदेन व्यक्त्यतिरिक्तत्वान्न तादृशप्रतीतिर्नियामके। अतः, सादृश्यसामर्थ्यवदनुगताभ्यां व्यतिरिक्ता जातिरभ्युपगन्तव्या। ननु व्यक्तिव्यतिरिक्तजातिस्वीकारेऽपि सा सकला अपि व्यक्तीरेककालमनुगच्छतीत्यभ्युपेयम्।

तथा च नानादिग्देशावस्थितानां गोव्यक्तीनामन्तरालस्थितासु अश्वा-दिव्यक्तिष्वपि गोत्वजातेः संबन्धाद् गवाश्वादौ तस्याः सांकर्यप्रसंग इति चेन्न। जातीनां प्रतिनियताश्रयवृत्तित्वाभ्युपगमात्। तथा चात्रेयमुपपत्तिः। यथाऽऽत्मनो विभुत्वेन संबन्धाऽविशेषेऽपि मनुष्यादिशरीरवच्छेदेनैव चैतन्याभिव्यक्तिर्न काष्ठकुड्याद्यवच्छेदेन तथा गोत्वजातेः सर्वत्र संबन्धाऽविशेषेऽपि गोत्वव्यक्तिष्वेवाभिव्यक्तिर्नेतरव्यक्तिषु इति। किमत्र प्रयोजकमिति चेत्—विशिष्टाकृतियोगित्वं व्यक्तीनामित्यवेहि। गवां हि अवयवसंनिवेशोऽन्यः, अश्वानान्तु अन्य इति गोत्वाश्वत्वजात्यो-राधारनियमसिद्धिः। नन्वेवं तर्हि भिन्नजातीयव्यक्तिषु परस्परं विलक्षणात् अवयवसंनिवेशात् सादृश्यापरपर्यायात् प्रतिनियमेन गवाश्वादिषु अनुगताकारप्रत्ययोऽस्तु, अवयवसन्निवेशो हि यथा

प्रतिव्यक्तिभिन्नोऽपि सादृश्यात्सामान्यस्याऽऽश्रयानियमनहेतुतया अनुगताकारस्य ज्ञानस्यापि हेतुर्भवतु इत्यलमन्तर्गडुवद् व्यर्थेन सामन्येन। तदुक्तम्—

तुल्य भेदे यथा जातिः प्रत्यासत्त्या प्रसर्पति ।
क्वचिन्नान्यत्र सैवास्तु शब्दज्ञाननिबन्धनम्[1] ॥ इति ॥

अयमर्थः। तुल्यभेदे—गवाश्वव्यक्त्योरिव गोव्यक्त्योरपि परस्परं भेदस्य च तुल्यत्वेऽपि—यथा अवयवसन्निवेशरूपाकृतिरूपसादृश्यप्रतियोगिकया प्रत्यासत्त्या जातिर्गोत्वा रूपा क्वचित् गोव्यक्तावेव प्रसर्पति सम्बद्धा भवति, अन्यत्र अश्वादिव्यक्तौ न, सैव—आकृति प्रतियोगिका प्रत्यासत्तिरनुगतयोः शब्दज्ञानयोर्निबन्धनं नियामकस्तु अलं जात्यभ्युपगमेन इति चेदत्रोच्यते। दृश्यते हि लोके कार्याणां प्रतिनियतकारणजन्यत्वमतो न सर्वं कारणमविशेषेण सर्वत्र कार्ये व्यापारयितुं शक्यते—तथाहि दण्डीति प्रत्यये दण्डसम्बन्धो निमित्तम्। स तु दण्डसम्बन्धः सर्वत्र किं न भवतीत्युक्ते दण्डजिघृक्षा तस्य निमित्तमुच्यते। किन्तु दण्डसम्बन्धं प्रतिनियमेन हेतुभूताया दण्डोपादानेच्छाया एव दण्डीति प्रत्यये हेतुत्वमस्तु किमपरेण तत्र दण्डसम्बन्धरूपेण निमित्तेन प्रयोजनमिति वक्तुं न शक्यते।

किञ्च दण्डोपादित्सा दण्डसम्बन्धस्य निमित्तम्। तस्या अपि किं निमित्तमिति प्रश्ने यत्र कार्ये दण्डस्य विनियोगस्तत्र सामर्थ्यादिदर्शनं तदुपादित्सानिमित्तं वक्तव्यम्। एवञ्च तत एव दण्डजिघृक्षा निमित्ताद् दण्डोपादित्सावान् इति ज्ञानमस्तु स्वात्मनि इच्छा समवायः किमत्र निमित्तमुद्धोष्यते इत्यपि न वक्तुं शक्यते। अनुरूपं कि कार्यमनुरूपकारणजन्यमितीच्छासंबन्धादिच्छावानिति ज्ञानं न ततो दण्डीति ज्ञानमिति। एवं सादृश्यादो सामान्यस्याश्रयनियमनसामर्थ्ये सत्यपि न तस्मादेव सामर्थ्यादनुगताकार जननं युक्तम्, यथा सादृश्यस्य तत्सदृशमित्यादिज्ञानजनकत्वम् इति अनुगताकार ज्ञाननिमित्तं

---

१. ( वा० प० तृ० का० जा० स० हे० रा० टी० ३।१।६४ )॥ इति ॥

सादृश्यादिव्यतिरिक्तं सामान्यमवश्याश्रयणीयमिति सिद्धम् । सामर्थ्यस्य तु अनुगतयोः शब्दज्ञानयोर्निमित्तत्वं नोपपद्यते इति दर्शितं हरिणा :—

स्वभावो व्यपदेश्यो वा सामर्थ्यं वाऽवतिष्ठते ।
सर्वस्यान्ते यतस्तस्माद् व्यवहारो न कल्पते[1] ॥

अस्यार्थः—यतः सर्वस्य प्रश्नस्यान्तेऽवसाने व्यपदेश्यः स्वभावो वा व्यपदेश्यं सामर्थ्यं वा कार्यनियामकत्वेनावतिष्ठते । तस्माच्च तादृशात्स्वभावात् सामर्थ्याद्वा व्यवहारो न कल्पते न प्रसिध्यति अतः स्वभावसामर्थ्येनानुगतशब्दज्ञाननिबन्धः वक्तव्ये इति ।

अयं भावः । इह लोके कार्याणां प्रतिनियत कारणानभ्युपगमे कारणकारणादेव सिद्धावभ्युपगम्यमानायां तत्रापि तत्कारणमूलक-सिद्ध्यभ्युपगमेऽनवस्थायामापादितायां सर्वान्ते मूलकारणे प्रधाने ब्रह्मणि वाऽवस्थातव्यम् । तच्च सर्वस्य वस्तुनो मूलं कारणं सर्वस्य वादिनोऽन्ते प्रश्नावसाने नित्यस्य प्रधानादेः कारणस्य स्वभावो व्यपदेश्योऽयमस्य स्वभावोऽस्माद्धातोरित्येवं व्यपदेष्टुमशक्यः अवतिष्ठते ।

अतएव मूलकरणं प्राप्यहेतुप्रश्नपरम्परा निवर्तते । येषां त्वनित्यं कारणं तेषां सामर्थ्यं हेतुशक्तिः प्रश्नपरम्परावसानेऽवतिष्ठते । तदपि सामर्थ्यं वैलक्षण्येनाव्यपदेश्यमेव । इदं तदितिशब्देन व्यपदेष्टु-मशक्यत्वात् ।

अथवा नित्यकारणपरिग्रह एव तस्यात्यन्तपरोक्षत्वात्स्वभावो व्यपदेश्यः । अनेकशक्त्यात्मकत्वे तुसामर्थ्यमप्यस्य परोक्षत्वादेवाव्य-पदेश्यम् । एकमेव वा वस्तुस्वभावशब्देन सामर्थ्यशब्देन च व्यवहरन्ति ये, तदुक्तिभिरेवात्र प्रतिपादयति । एवमव्यपदेश्यस्वभावेऽवस्थानात् तस्माद् व्यपदेश्याद् स्वभावात् शब्दो व्यवहारो न प्रकल्पते । वाक्ये यथाऽनुज्ञातवस्तुनिबन्धनो हि परिदृश्यमानः स्थूलार्थाश्रयो गामानय, ओदनं भुङ्क्ष्वेति व्यवहारः सोऽन्यहेतुवशः इति स्वभावः सामर्थ्यं वा

---

१. ( वा० प० तृ० का० जा० स० १।३।९५ ) ॥ इति ॥

आनय भुङ्क्ष्व चेत्येवं व्यवहारस्य मूलकारणं वक्तव्यम्। अव्यपदेश्यत्वाच्च स्वभावादेस्तेन व्यवहारो नोपपद्यते इत्युक्तमव्यवहार्यं वस्तूपक्षेप्तुमिति। तदेवमभिन्नशब्दज्ञानरूपव्यवहारनिबन्धनानि सामान्यानि अभ्युपगन्तव्यानि। सादृश्यात्तु सदृश इति व्यवहारः, शक्तिमत्त्वात्तु शक्तिमानिति, न तु गौर्गौरित्यनुगतो व्यवहार इति। अन्यच्च सादृश्यज्ञानं सामान्यज्ञानात्, भिन्नजातीयेष्वपि गोगवयादिषु भावात्। ननु नावधार्यन्ते व्यक्तितो विवेकेन जातय अत्यनुगतस्य ज्ञानस्य निमित्तपरिकल्पनायां यत् किञ्चिदेव तत्र निमित्तं स्यादिति कोऽभिनिवेशो जातिपरिकल्पन इति चेदुच्यते। तत्र रूपवद्द्रव्यसमवेतानि घटत्वादीनि चाक्षुषाण्येव सामान्यानीति न तत्र प्रमाणान्तरगवेषणा।

तत्र विप्रतिपन्नं प्रति तु तेषां कार्यकल्प्यत्वमुच्यते। अनुगतज्ञानरूपं हि तत्कार्यं जडाङ्कुरादि सदृशम्, अपितु बोधरूपमिति। तस्यानुगतबोधरूपस्य कार्यस्य तत् सामान्यं न चक्षुरादिवदधिपतिप्रत्ययरूपं कारणम्, अपितु घटादिवदालम्बनप्रत्ययरूपम्। आलम्बनं च संवेद्यमानम्। अतश्चेहापि तदेवायात् संवेद्यते तस्य स्वरूपमुपयुज्यमानमिति। यदुच्यते विकल्पस्य सामान्यं विषयो न प्रत्यक्षस्येति सामान्यं न वस्तुसदिति।

तदयुक्तम्। सामान्यस्यासत्वे सिद्धे तज्ज्ञानं विकल्पो न प्रत्यक्षमिति वक्तुं शक्यम्। सामान्यस्य सत्वे तु नैतद् वक्तुं शक्यते। सत्यविषयकत्वात्। किञ्च विकल्पविषयत्वात् सामान्यस्यासत्वम्, असत्यविषयकत्वाच्च तस्य विकल्पत्वमिति इतरेतराश्रयता। किञ्च ज्ञानस्य प्रतिकर्मव्यवस्थायां बौद्धैरुच्यते यतोऽनीलाकारमतोऽनीलस्य संवेदनमिति। कोऽनयोरुक्त्योर्विशेषः। येन नीलं प्रत्यक्षं, सामान्यमीदृशमेवाप्रत्यक्षमिति बौद्धं प्रति सामान्यसिद्धिः। एवमस्य गौर्गौरिति अनुगताकारज्ञानविषयस्य गोत्वरूपस्य सामान्यस्य नास्ति कश्चिद् विशेषो दण्डादिभ्योऽनुगताकारज्ञानाधानं प्रति इति नास्ति वैसादृश्यं निदर्शने दण्डीति

इच्छावानित्यादिज्ञानरूपैः साकं गौर्गौरिति अनुगताकारज्ञानस्य तद्विषयस्य वा तद्विषयैः सह। दुग्धोपादिरूपा प्रवृत्त्यादिरूपैकार्थ-क्रियाकारित्वाच्च गौर्गौरिति कालभेदभावी अपि प्रत्ययो भिन्नो नास्ति कारणभेदात् फलभेदाच्च कार्याणामपि भेदात्, अत्र च तदभावात् इत्येक प्रत्यवमर्श एवासति सामान्यैर्नोदियात्।

किञ्च सांख्यानां नये रूपादिव्यतिरेकेण द्रव्यानभ्युपगमात् प्रत्यर्थमपि नास्ति एकार्थसाध्या काचिदर्थक्रिया, किमुतार्थभेदे भवेत्। उदकाहरणाद्यपि रूपादिसमुदायबुद्धिर्भवेन्नतु घट इत्येकबुद्धिः, यथैकांकुर जनकत्वेऽपि क्षितिबीजादिषु समुदायबुद्धिरेव नत्वेकत्वबुद्धिः।

यदि तु रूपादिसमुदायरूपेऽपि घटादि द्रव्यैर्मिथ्यासंविद्रूपा एकबुद्धि-रित्युच्यते तदाऽपि क्वचित्सत्या घटादिद्रव्ये एकबुद्धिरेष्टव्या, मिथ्याबुद्धेः क्वचित्सत्यबुद्धिमूलकत्वादिति नोपलभ्यानि प्रतिद्रव्यं प्रतिनियतकार्य-साधनानि सामान्यानि इति।

---

## ३१—जातिवादे सदृशबुद्धेर्विषयसमर्थनम्

इह व्यक्तिगतानां भेदहेतुनामसाधारणधर्माणां नीलपीतादीना-मविवक्षारूपे परिग्रहरूपे वा परित्यागे सामान्यबुद्धिः गौर्गौरिति, तेषामपि परिग्रहे तु समुदायबुद्धिरिति प्रकारान्तराभावान्निर्विषया सादृश्यबुद्धिरित्याशंक्य समाहितं हरिणा—

सकृत्प्रवृत्तावेकत्वमावृत्तौ सदृशात्मताम्।
भिन्नात्मिकानां व्यक्तीनां भेदाऽपोहात्प्रवर्तते[1] ॥

अस्यार्थः —

भिन्नात्मिकानां स्वगता साधारणधर्मैर्नीलपीतादिभिर्भिन्नस्वरूपाणां व्यक्तीनामसाधारणधर्माविवक्षया तत् परिग्रहेण वा भेदापोहात् भेद-

---

१. ( वा० प० तृ० का० जा स० ३।१।१८ ) ॥ इति॥

निरासात् व्यक्तिबुद्धेः सकृत्प्रवृत्तौ लोकः व्यक्तीनामेकत्वं प्रपद्यते जानाति, व्यक्तिबुद्धेरावृत्तौ आवृत्त्या प्रवृत्तौ तु व्यक्तीनां सदृशात्मतां प्रपद्यते इति।

अयं भावः। भिन्नात्मिकानां व्यक्तीनां सकृत्प्रवृत्तौ भेदापोहात् भेदविरहितमेकत्वं जात्यात्मकं भेदानुस्यूतं वा एकत्वं समूहात्मकं प्रतिपद्यते बुद्धिः। व्यक्तिबुद्धेरावृत्तौ तु सदृशात्मतां प्रतिपाद्यते इति।

तथा हि—भेदहेतुपरित्यागेनाऽभिन्नात्मिका व्यक्तीर्विषयीकृत्याऽनन्तरं व्यक्तीनां कार्यभेदान् विषयीकुर्वाणा गृहीतभेदा एव ता व्यक्तीर्गृह्णाति इति प्रवाहाविच्छेदात्सैव बुद्धिर्भेदापोहान्नान्या।

आवृत्तेरेकधर्मत्वात्सदृशात्मतां प्रतिपद्यते। एवं भेदाभेदावग्रहरूपत्वान्नेयं जातिबुद्धिः, तस्या नियमेनाऽभेदावग्रहरूपत्वात्। नापि समूहबुद्धिः, सकृदेव भेदानुस्यूतस्याभेदस्य तत्र ग्रहणादावृत्त्यभावाच्च।

समूहग्रहणे हि समूहिनामेकैव बुद्धिरनावृत्ता सामान्यं गृह्णाति। गोगवययोः सादृश्यग्रहे तु पूर्वं तयोर्भेदं प्रतिपद्यानन्तरमवयवसन्निवेशविशेषाधीनोऽभेदो गृह्यते इति तत्र सादृश्यबुद्धिस्तयोः। एवं बुद्धिभेदादेव सादृश्यं न सामान्यमित्युक्तं भवति इति।

———

## ३२—सौगतानां काल्पनिकं जातिदर्शनम्

इह लोके गौर्गौरित्यभिन्नप्रत्ययग्राह्या गोत्वजातिरित्युच्यते। नत्वभिन्नः प्रत्ययोऽस्ति। नहि च एवैकस्यां व्यक्तौ गौरिति प्रत्ययः स एव द्वितीयस्याम्, अपि त्वन्य एव। बुद्धीनां विषयभेदेन भेदात्। अतो नैव कश्चिद् भिन्नेष्वभिन्नप्रत्ययः। केवलं विषयभेदेन भिन्नाऽपि सती बुद्धिः अनुप्रवृत्ता (अनुगतं शब्दं विषयीकृत्य प्रवृत्ता) इति अभिन्ना प्रतीयते। न च तत्र बुद्धितत्त्वव्यतिरेकेणान्यत् ज्ञेयगतं गोत्वादि रूपं ज्ञानगतं वा

ज्ञानत्वादि रूपं सामान्यमस्ति । तस्याप्यभिन्नप्रत्ययस्य प्रतिबुद्धिभेदात् । तत्राप्यपरापरसामान्यकल्पनायामनवस्थापातात् । न च बुद्धिगतस्य सत्तापरसामान्यस्याऽसाधारणः कश्चिद् वाचकोऽस्ति इति प्रमाणाऽभावात् कितत्सामान्यं नाम ।

यतश्च व्यक्तिबुद्धीनामनादिकालीनव्यक्तिभेदावग्रहसामर्थ्यप्रतिघात-निमित्तकविभ्रमवशाद् यथा बुद्धीनामभेदावग्रहो वस्तुतो भिन्नानामपि, तथाऽर्थानामपि व्यक्तिरूपाणां स्वरूपपररूपाभ्यां व्यावृत्तस्वभावानाम् अभेदेन सामान्याऽवग्रहेणावसायो भविष्यति इति भेद एव परमार्थोऽ-भेदावसायो मिथ्येति सौगताः ।

तदुक्तं हरिणा :—

अनुप्रवृत्तेति यथा भिन्ना बुद्धिः प्रवर्तते ।
अर्थो व्यावृत्तरूपोऽपि तथा तत्वेन गृह्यते[1] ॥

अस्यार्थः । विषयभेदेन प्रत्यर्थं वस्तुतो भिन्नाऽपि बुद्धिः अनुप्रवृत्ता अनुगतं शब्दमादाय प्रवृत्तेति कृत्वा यथा अनुगता प्रतीयते, तथा प्रतिव्यक्ति भिन्नेरसाधारणैर्नीलपीतादिभिधर्मैर्व्यावृत्तरूपोऽपि व्यक्तिरूपोऽ-र्थस्तत्वेन अभेदन सामान्याऽवग्रहेण गृह्यते, प्रागुक्तरीत्याऽनादिकालीन-भेदाऽवग्रहसामर्थ्यप्रतिघातनिमितकविभ्रमवशादिति ।

---

## ३३—जातिवादिनयेन ज्ञानगतजात्याऽर्थजातिसमर्थनम्

खण्डमुण्डगवादिषु गौर्गौरिति अनुगताकारो 'अनुगताकारोऽभिन्न-प्रत्ययः' सर्वत्र जातिसत्त्वावेदको नापलपितुं शक्यते इति ज्ञानानामपि प्रत्यक्षानुमित्यादीनां सामान्यविशेषाः प्रत्यक्षत्वादयः सन्तु नाम न काप्यऽनुपपत्तिरिति वस्तूनां भेदाभेदतिरूपं सामान्यविशेषसंसर्गनिमित्तं

१. (वा० प० तृ० का० जा० स० ३।१।६६ ) ॥ इति ॥

मन्यमानाः प्राहुः। ता एव ज्ञानगता जातयो बाह्यानामर्थजातीनां प्रसाधिकाः। बुद्धेः "स्वगतजात्याऽनुगतावभाससिद्धो व्यक्तीनामपि अनुगतावभासनिमित्तस्य सामान्यस्यावधारणात्। यत्र यत्र च सत्यप्य-वान्तरविशेषेऽभिन्नः प्रत्ययोऽस्ति तत्र तत्र प्रमाणसिद्धानां सामान्य-विशेषाणामङ्गीकरणमान्त्येऽपि न दोषाय। प्रामाणिकगौरवस्या-दोषत्वात्। अवान्तरसामान्यविशेषेषु असाधारणसंकेताभावेऽपि च जात्युत्पलादिगन्धविशेषादीनामिवाऽनुभवसिद्धं सत्वमस्त्येव। तदुक्तं हरिणा—

ज्ञानेष्वयथाऽर्थेषु तथा सर्वेषु जातयः।
संसर्गदर्शने सन्ति ताश्चार्थस्य प्रसाधिकाः"[1] ॥ इति ॥

अस्यार्थः। व्यक्तिविशेषेषु सामान्यविशेषाणां संसर्गस्य निमित्तं भेदाभेदरूपं—यत्र दर्शनं तत्र यथाऽर्थेषु जातयः सन्ति तथा सर्वेषु ज्ञानेष्वपि जातयः सन्ति प्रत्यक्षत्वानुमितित्वादिकाः, ताश्चार्थस्य बाह्यार्थगतजातिरूपस्य प्रसाधिकाः निश्चायिकाः। यद्वाऽर्थस्यात्मीयस्य प्रयोजनस्य सामान्यकार्यरूपस्यानुवृत्तबुद्ध्यादेः प्रसाधिका इति।

---

## ३४—ज्ञेयागतायाजातेर्ज्ञानोपकारकत्वम्।

यथा ज्ञेयं स्वव्यतिरिक्तसामान्यरूपेण रूपवत् क्रियते न तथा ज्ञानं संविदात्मकं स्वसमवेतेन स्वव्यतिरिक्तसामान्यं रूपेण रूप्यते। पररूपेण रूपणस्य ज्ञेयधर्मत्वात्। ज्ञानं तु स्वप्रकाशे स्वतन्त्रं स्वप्रकाशं ज्ञेयमेव न भवति। ज्ञानानां च ज्ञेयनिष्ठतया ज्ञेयस्थस्य सामान्यस्याभेदेन ज्ञानानामभेदावसायः प्रत्यर्थं नियतत्वेऽपि उपपद्यते। ज्ञानानां बाह्यार्थ-परतन्त्रत्वे स्वत एव वैलक्षण्यानुपपत्तेर्बहिर्भिन्नेन निमित्तेन तत्र भाव्यम्।

---

१. (वा० प० तृ० का० जा० स० ३।१।१०२ ॥ इति ॥

तद् यथा घटो घट इति घटाकारे ज्ञाने बाह्यं निमित्तं तथा ज्ञानानामभेदेऽपि ज्ञेयगतं सामान्यं निमित्तमिति युक्तम् ।

तदुक्तं हरिणा—

ज्ञेयस्थमेव सामान्यं ज्ञानानामुपकारकम् ।
न जातु ज्ञेयवज्ज्ञानं पररूपेण रूप्यते[1] ॥ इति ॥

———

## ३५—जातिपदार्थवादे सरूपसूत्रस्य फलाभावः ।

जातिपदार्थवादे सरूपसूत्रस्य नास्ति फलम् । भेदारूपानुस्यूतायाः समूहबुद्धेस्तत्र शब्देनैकेनैव जननात् शब्दान्तरप्रवृत्तेरनावश्यकत्वात् इति ।

**इति व्याकरणशास्त्रदृष्ट्या जातिस्वरूपविमर्शो द्वितीयोऽध्यायः**

———

१. (वा० प० तृ० का० जा० स० ३।१।१०३ ॥ इति ॥

## अथ तृतीयोऽध्यायः

### तत्र जातेरप्रत्यक्षत्वपक्षेऽनुमेयत्वमस्ति न वा

#### १—जातेरप्रत्यक्षत्वपक्षेऽनुमेयत्वमस्ति न वा

तत्र जातौ रूपमहत्त्वयोरभावान्न चक्षुर्ग्राह्या। स्पर्शाभावान्न त्वग्ग्राह्या। शब्दत्वरसत्वगन्धत्वजातीनामभावान्नश्रवणरसनघ्राणग्राह्येत्यप्रत्यक्षा। तत्राऽप्रत्यक्षत्वेऽपि अनुमेयत्वमस्त्येव। अत्र सामान्यतोऽनुमानं यथा सर्वा द्रव्यगुणकर्मविषया अनुगतबुद्ध्य एकधर्महेतुका अनुगतबुद्धित्वाद्, व्यतिरेकं व्यावृत्तबुद्धिवत् इति। स च धर्मो व्यक्तेरभेदस्तुल्यत्वमित्यादीनां बाधकानामभावे जातित्वेन व्यवह्रियते नैयायिकादिभिर्जातिवादिभिः। विशेषतोऽनुमानेभ्यश्च कारणतावच्छेदकतया कारणेषु कार्यतावच्छेदकतया कार्येषु शक्यतावच्छेदकतया शक्येषु शक्ततावच्छेदकतया पदेषु तत्र तत्र न्यायादिग्रन्थेषु दर्शितेव। यदि तु उपदर्शितरीत्या कारणतावच्छेदकत्वादिरूपैस्तत्तदनुगतधर्मसिद्धावपि न तत्र जातित्वसिद्धिर्मानाभावात्।

जातित्वोपाधित्वपरिभाषायाः स्वकपोलकल्पितत्वात्। एवं जाति-लक्षणं जातिदोषाश्च व्यक्त्यभेदादयः स्वकपोलकल्पिता एव नहि तत्र किञ्चिन्मानमस्ति इत्युच्यते तदा अनुमेयत्वमपि नास्ति तस्याः इति निष्कर्षः।

---

## २—शाब्दबोधविषयत्वमस्ति न वा

घटादिशब्दानां तत्तज्जात्यवच्छिन्नेषु तत्तज्जातौ वा शक्तिरिति मते जातेः शाब्दबोधविषयत्वमस्त्येव। यदि तु घटादिशब्दानां तत्तद्-धर्मावच्छिन्नेषु शक्तिरित्युच्यते तदा नास्त्येव जातेः शाब्दबोध-विषयत्वम्। किञ्च घटत्वादिधर्माणां स्वरूपेणैव घटादिपदजन्यबोध-विषयत्वं न तु जातित्वेनेत्यतोऽपि नास्ति तस्याः शाब्दबोधविषयता। वस्तुतस्तु जातेर्घटादिपदजन्यबोधविषयत्वाऽभावेऽपि सामान्याकृत्यादि-पर्यायपदजन्यबोधविषयत्वं न वारयितुं शक्यते[1]।

यदि तु शब्दप्रमाणस्यानुमान एवान्तर्भाव इति वैशेषिकमतमाद्रियते तदा नास्ति जातेः शब्दबोधविषयत्वम्। तथा हि अनुमान एव शब्द-स्यान्तर्भावमङ्गीकुर्वतां व्योमशिवाचार्यातिरिक्तानां नवीनानां भाष्यका-रादीनां च सर्वेषामयमभिप्रायः। यथा हि—गृहीतसम्बन्धस्य लिङ्ग-दर्शनानन्तरं व्याप्त्यनुस्मरणं ताभ्यामतीन्द्रियेऽर्थेऽनुमानरूपं परामर्शज्ञानं जायते तथा शब्दश्रवणात्समयानुस्मरणे सति परामर्शज्ञानं तस्मात्परोक्षार्थप्रतिपत्तिरिति।

तथा चायं गौरित्याद्यर्थपक्षकानुमानेनैवान्वयधियः संभवे किं शब्दाख्यप्रमाणेनातिरिक्तेनेति। एतच्च व्योमशिवाचार्यवैशेषिकभाष्यं टीकादिभिरपि खण्डितम्। तेषामयमाशयः—धूमवच्छब्दोऽर्थज्ञाने न

---

१. (शब्द० श० प्र० का०) ॥ इति ॥

स्वाभाविकं संबन्धमपेक्षते, किन्तु पुरुषेच्छासंपादितसमयापेक्ष एवार्थ-प्रतिपादकः स्वाभाविकसम्बन्धविनाऽपि संकेतं म्लेच्छादिशब्द-श्रवणादर्थप्रतिपत्तिः स्यात् । संकेतापेक्षस्य स्वयंप्रतिपादकत्वे स एवास्त्वलं नित्यसम्बन्धेन ।

तथा च शब्दानां समयवशेन (संकेतवशेन) अर्थप्रतिपादिकत्वा-दुपपन्नमनुमानादर्थान्तरत्वम् इति । ननु योग्यताऽऽकाङ्क्षयोः शाब्दबोध-सामग्र्योर्लिङ्गत्वसंभवेन शाब्दबुद्धेरनुमितित्वमेवास्तामिति चेन्न । अर्थगता बाधाभावरूपा योग्यता, तथा शब्दनिष्ठाऽन्वयबोधानुकूलानुपूर्वी रूपाकाङ्क्षा च शाब्दबोधजनिका भवति । किन्तु प्रत्येकमेकैकशो मिलित्वा संभूय वैते योग्यताऽऽकाङ्क्षे स्वयमसिद्धत्वाद् हेतोर्न लिङ्गं भवितुमर्हतः । तदुक्तं श्रीजगदीशतर्कालंकारैः शब्दशक्तिप्रकाशि-कायाम् :—

योग्यतार्थगताऽऽकाङ्क्षा शब्दनिष्ठानुभाविका ।
प्रत्येकं वा मिलित्वा वा नैतेर्लिङ्गमसिद्धितः[1] ।। इति ।।

एतदेवोपदर्शितं शब्दशक्तिप्रकाशिकायां मङ्गलपद्येनापि तैः —

अनुभवहेतुः सकले सद्यः समुपासितामनुजे ।
साकाङ्क्षाऽऽसन्ना च स्वार्थे योग्या सरस्वती जयति[2] ।। इति ।।

अस्यार्थः —

यथा सम्यगाराधिता वाङ्मयाधिष्ठात्री सरस्वती देवी उपासितु-र्मनोरथं पूर्णं कर्तुमभिलषन्ती तत्र समर्था च सती संनिहिता भूत्वा सकलोपासकेभ्यः फलप्रदाने वैषम्यबुद्धिं परिहरन्ती सती प्रत्यक्षा जायते, तथा वाक्यरूपाऽपि साऽऽकाङ्क्षाऽऽसत्तियोग्यताविशिष्टा गृहीता ज्ञाता सती शब्दखण्डे न्यायव्याकरणोभयमतेन व्युत्पत्तिद्वारा प्रवेशमिच्छति सर्वस्मिन्नुपासके पाठके सद्य एवानुभवं शाब्दबोधात्मकं जनयतीति ।

———

१. ( श० श० प्र० का० २, पृ० सं० ३ ) ।। इति ।।
२. ( श० श० प्र० का० ४०, पृ० सं० ११ ) ।। इति ।।

## ३—जातावेव शक्तिरिति मीमांसकमतविमर्शः

तत्र जातिमात्रे पदस्य शक्तिरितिवादिनां भाट्टानामयमाशयः— वाक्यार्थप्रतिपत्त्यनुकूलपदपदार्थस्मरणजनकपदपदार्थयोः संबन्धस्तावद् वाचकत्वं नाम सकलवादिसिद्धम्। तच्च संकेता वा पदार्थान्तरं वेत्यन्यवेतत्। स च सम्बन्धः कुत्र कल्प्यतां जातिमात्रे वा जाति-व्यक्त्योर्वा इति विमर्शे जायमानेऽपि जातादेव तत्कल्पना ज्यायसी, 'नागृहीतविशेषणा इति न्यायात्" न तु व्यक्तौ–अनन्ताभिर्व्यक्तिभिः सह संबन्धग्रहणस्याशक्यत्वात्। सामान्यलक्षणायाः प्रत्यासत्तेः प्रमाणाभावेनानङ्गीकारात्। तथात्वे वा—व्यक्तेरन्यथालाभसंभवेन तत्र शक्तिकल्पनस्य गौरवपराहतत्वात्। अतएवोक्तम्—

"विशेष्यं नाभिधा गच्छेत्क्षीणशक्तिर्विशेषणे[१]" इति।

व्यक्तेः कथं लाभः? इति चेत्? कर्मत्वं गवीयं गोत्वनिष्ठकर्मतात्वात् इत्याद्यनुमानरूपाक्षेपेणैव तल्लाभसंभवात्। ननु व्यक्ति विना किमनुपपन्नम्, न तावज्जातिः व्यक्तिविनाजातिस्वरूपावस्थानादिति। मैवम्। जातेर्हि व्यक्तिवृत्तिता नियतेति कथमाक्षेपानुपपत्तिः[२]।

न च जातिव्यक्त्योर्युगपत्प्रतीतिदर्शनात्कथमाक्षेप्याक्षेपकभाव इति वाच्यम्। गौरवप्रसङ्गरूपबाधकबलेन युगपत्प्रतीतेर्भ्रान्तत्व कल्पनस्यौचित्यात्। तस्माज्जातावेव शक्तिरिति। ननु जातिशक्तिवादे गोत्वादावानयनकर्मत्वाभावात् कथं कर्मत्वे गोत्वादेराधेयतयाऽन्वयबोधो गामानयेत्यादौभविष्यति। योग्यताविरहादिति चेन्न।

सुबर्थकर्मत्वादौ स्वाश्रयवृत्तित्वसम्बन्धेनैव प्रकृत्यर्थस्य गोत्वादेः साकाङ्क्षत्वात्। गवादिकर्मताकत्वेन बोधस्तूत्तरकालमाक्षेपादिति। कर्मत्वं गवीयं गोत्वनिष्ठकर्मतात्वात्, आनयनं गोवृत्तिकर्मताकं गोत्ववृत्तिकर्मताकत्वादित्याद्यनुमानसाम्राज्यात् इति। व्यक्तेः प्राधान्या-

---

१. ( वै० भू० सा० नामार्थनिरूपणे टी० दर्पणः ) ॥ इति ॥

२. ( वै० भू० सा० का० १ ) ॥ इति ॥

नुभावाल्लक्षणा व्यक्तौ, आक्षेपे तूपसर्जनता स्यादिति भाट्टैकदेशि-मण्डनमिश्रमतम्। तस्यायमाशयः—गौर्जायते गौर्नश्यति इत्यादौ सर्वत्र गोत्वादिजातिशक्तेनैव गवादिपदेन लक्षणया गोत्वादिविशिष्टा व्यक्तिर्बोध्यते व्यक्तीनां बहुत्वेन अन्यलभ्यत्वेन च तत्र शक्तेरकल्पनात् तात्पर्यानुपपत्तेरपि लक्षणायां बीजत्वात्। यदाऽऽहुर्मण्डनाचार्याः—

जातेरस्तित्वनास्तित्वे नहि कश्चिद् विवक्षति।
नित्यत्वाल्लक्षणीयाया व्यक्तेस्ते हि विशेषणे[1]॥ इति॥

गामानयेत्यादि वाक्यस्थले विभक्त्युपनीतकर्मत्वादेर्व्यक्त्यन्वयाऽनुपपत्त्या जरत्प्राभाकरैरर्थजरतीपन्यायेन कुब्जशक्तिवादः[2] कल्पितस्तेषामयमभिप्रायः शक्तिर्हि शक्य-कार्यापेक्षया कार्यञ्चात्र जातिविशिष्टव्यक्तिज्ञानरूपमेकमेवेत्येकैव सा, तस्याश्च विशिष्टगोचरता विशिष्टज्ञानविषयतयैवेति विशिष्टगोचरा एकैव शक्तिः, किन्तु जातिनिष्ठतया ज्ञातोपयुज्यते, व्यक्तौ तु स्वरूपसती न तु ज्ञाता, अन्यथा गौरवात्, समानसंवित्संवेद्यतया च व्यक्तेरपि मानमिति तल्लाभ इति। व्यक्तेरन्वयप्रकारतया मानमिति च गुरुमतैकदेशिनः। केवलजातेरानयनाद्यन्वयाऽयोग्यतया तद्योग्यताघटकत्वेन घटपदे उच्चारिते। छिद्रेतरत्ववद् व्यक्तिः प्रतीयते—इति तेषां तात्पर्यम्। अत्र च तन्मतेन गोव्यक्त्याकृतिर्न गोशब्दवाच्ये गोत्वभिन्नत्वात् पटवदित्यनुमानप्रयोगो द्रष्टव्यः।

———

## ४—जातिविशिष्टव्यक्तौशक्तिरिति न्यायमतविमर्शः

जात्याकृतिविशिष्टव्यक्तौ शक्तिरिति नैयायिकाः। तथा च गौतमसूत्रम्। जात्याकृतिव्यक्तयः पदार्थ इति। ते च केवलजातिशक्तिवादिनो मीमांसकत्रयस्य मतान्येवं क्रमेण निरस्यन्ति। तत्र प्रथमं भट्टमत-

1. ( वा० प० तृ० का० जा० स० क० ) ॥ इति ॥
2. ( वा० प० तृ० का० जा० स० हे० रा० टी० ) ॥ इति ॥

प्रकारनिरासप्रकारः प्रदर्श्यंते । अयमत्र नैयायिकानामभिप्रायः । गामानयेति वाक्यश्रवणान्तरं प्रयोज्यवृद्धस्य गवानयने प्रवृत्तिर्दृश्यते । सा च गवानयनज्ञानसाध्या, तच्च ज्ञानं गामानयेति वाक्यजन्यम्, वाक्यजे ज्ञाने पदोपस्थापित एवार्थोऽन्वयप्रतियोगितया भासते इति सिद्धान्तात् । तथा च गोपदाद् गोव्यक्तेरनुपस्थितौ कथमन्वयप्रत्ययः । आक्षेपोपस्थितस्य च वाक्यजप्रत्ययान्वप्रतियोगित्वाभावात् । अन्यथा घटमानयेति वाक्यं रूपसंख्यापरिमाणादिकमाक्षिप्यान्वयबोधं विदध्यात् । न त्वेवं भवति, तथाऽनुभवाभावात् । किञ्चाक्षेपे व्यक्तेः प्राधान्येन भानम् न स्यात् । विनाऽपि आक्षेपं गामानयेत्यादितो गवादिकर्मताकत्वेनानयनादेरन्वयबोधस्यानुभविकत्वात् । गौर्गच्छतीत्यादौ शुद्धगोत्वे गतिमत्वादन्वयस्यानुभवेनास्पर्शात् । गोत्वत्वाद्यनुपस्थित्या च गोत्वं गच्छतीत्यादयाऽनुभवस्यासम्भवात् । स्वाश्रयवृत्तित्वसम्बन्धेन गतिमत्वादिहेतुना गवादौ साक्षात्सम्बन्धेन गतिमत्वाद्याक्षेपस्य व्यभिचारादिदोषेण दुष्यकत्वाच्च ।

गवादिपदानां जातौ शक्तिर्व्यक्तौ तु लक्षणेति मण्डनमिश्रमतमपि न युक्तम् । व्यक्तिं विना कुतायां गोत्वादिजातौ गवादिपदस्य मुख्यप्रयोगाभावेन तन्मात्रस्याशक्यत्वे तद्वति गवादौ लक्षणाया वक्तुमशक्यत्वात् । शक्यसम्बन्धस्यैव लक्षणात्वात । न च गोरन्यो महिष इत्यादौ पञ्चम्यर्थेऽवधित्वे प्रतियोगित्वे वा स्वावच्छेद्यत्वसम्बन्धेन शुद्धस्य गोत्वादेरन्वयात्तथाविधस्थलएव जातौ मुख्यप्रयोग इति वाच्यम् । तत्र पञ्चम्याः स्वार्थेऽवधित्वादौ स्वनिष्ठगोत्वा तच्छेद्यत्वसंसर्गेण प्रकृत्यर्थस्य गवादेरन्यत्वबोधकत्वात् । अन्यथा गोगोत्वयोर्भक्तिशक्तिभ्यां गोपदेन बोधने वृत्तिद्वयस्य योगपद्यापत्तेः । वस्तुतस्तु शुद्धस्य गोत्वादेः शाब्दधीप्रकारताया समवायावच्छिन्नत्वनियमात्तस्याऽवधित्वादौ स्वावच्छेद्यत्वादि सम्बन्धेनान्वयो दुर्घट एव । द्रव्य घट इत्यादिप्रतीतेः समवायेन प्रमात्वानुरोधात् घटत्वादिजातेर्नानात्वोपगमात् इति । प्रागुक्तकृत्स्नशक्तिवादिनां प्राभाकाराणां

मतनिरसने नैयायिकानामयमाशयः—गामानयेत्यादिवाक्याद् गोव्यक्ति-बोधात्तत्रापि गोपदशक्तिः स्वीकार्या। न च जातिप्रत्ययानन्तरं व्यक्ति-प्रतीतिरत्र येन विशिष्टशक्तिग्रहः स्यात्, विशेषणज्ञानस्य विशिष्ट-ज्ञानात्पूर्वं नियमेन सत्वस्यावश्यकत्वात्। किन्तु युगपदेव। न च तदुपापादकं युगपद् वृत्तिद्वयं सम्भवति। क्वचिन्मुख्यं हि क्वचिल्लाक्षणिकं भवति। न च जातौ क्वचिन्मुख्यः प्रयोगः, व्यक्तिमनादाय क्वचिदपि पदाज्जातेर्व्यवहाराऽभावात्, तथा च गोबोधार्थं तत्रापि शक्तिरावश्यकी। एवं जातौ निर्विकल्पकोपस्थितायां न शक्तिग्रहः किन्तु सविकल्पको-पस्थितायां आधेयतासम्बन्धेन जातौ विशेषणं व्यक्तिरेव। तथा च जातेः स्मरणमपि सविकल्पकतया विशेषणसापेक्षम्।

विशेषणञ्च व्यक्तिरेवेतिसमानसंवित्संवेद्यतया कथामाक्षेपः। न चान्वयप्रकारतयाऽपि व्यक्तेर्ज्ञानं किन्तु प्राधान्येन। किञ्च पदार्थोऽप-स्थितावन्वयप्रकारता स्यात्, व्यक्त्या विना जात्युपस्थितिरेव नास्तीति कस्यान्वये व्यक्तिः प्रकारः स्यात्। तस्मात् पदशक्तेः कार्यापेक्षतया उभयविषयकज्ञानस्यैव कार्यस्य अनुभवसिद्धत्वादुभयत्रैकैव शक्तिः। किञ्च न्यायमते पदानां शक्तिः संकेता न तु पदार्थान्तरम्। स च व्यवहारबलेन जातिवद् व्यक्तावपि गृह्यते। नहि गोपदाज्जातिमात्रं न व्यक्तिरिति युक्तिमत्। तस्मात्संकेताग्राहकस्य जातिर्व्यक्तिसाधारणस्य प्रमाणसिद्धत्वादुभयत्रापि संकेतरूपा शक्तिरिति न काऽप्यनुपपत्तिः। एवं गुरूणामर्धजरतीयपदानां जातिव्यक्त्योर्ज्ञाताज्ञातशक्तिस्वीकाररूपा प्रागुक्ता निरस्ता। स्वरूपशक्तेः पदार्थोपस्थित्यनङ्गत्वात् तदर्थ-मेव तस्याः कल्पनात्। अन्यथा जातावपि स्वरूपसत्येवास्ताभिरित्यपि वक्तुं शक्यत्वात्। तस्माज्जातिरिव व्यक्तिरपि यथासंभवमाकृतिरपि पदार्थं इत्यवधार्यैवोक्तमक्षपादेन 'जात्याकृतिव्यक्तयः पदार्थ'—इति तदेव युक्तम्। एवं जातिविशिष्टव्यक्तौ यथासंभवं जात्याकृतिविशिष्टव्यक्तौ च शक्तिरिति सर्वांशे च ज्ञातैव पदार्थोपस्थितिं प्रति कारणमिति च विद्धम्। तदेतत्सर्वमभिप्रेत्यैवोक्तं जगदीशतर्कालंकारेण शब्दशक्ति-प्रकाशिकायाम्:—

जात्यवच्छिन्नसंकेतवती नैमित्तिकी मता ।
जातिमात्रे हि संकेताद् व्यक्तेर्भानं सुदुष्करम्[1] ॥ इति ॥

व्याख्यातं चैवं तेनैव—"यन्नाम जात्यवच्छिन्नसंकेतवत् सा नैमित्तिकी संज्ञा । यथा गोचैत्रादिः । सा हि गोत्वचैत्रत्वादिजात्यवच्छिन्नमेव गवादिकमभिधत्ते, न तु गोत्वादिजातिमात्रम् । गोपदं गोत्वे संकेतितमित्याकरकग्रहाद् गामानयेत्यादौ गोत्वादिना गवादेरन्वयानुभवानुपपत्तेः । एकशक्तत्वग्रहस्यान्यानुभावकत्वेऽतिप्रसङ्गात्" इति ॥

—·—

## ५—जात्यादिषट्के शक्तिरिति वैयाकरणसिद्धान्तः ।

स्वार्थंद्रव्यलिङ्गसंख्याकारकाणि पञ्चशब्दस्वरूपन्तु षष्ठं नाम वाच्यम् इति तत्र नाम्नः शक्तिरिति वैयाकरणाः । तदुक्तं भूषणसारे—

एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा ।
नामार्थं इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः[1] ॥ इति ॥
शब्दोऽपि यदि भेदेन विवक्षास्यात्तदा तथा ।
नोचेच्छ्रोत्रादिभिः सिद्धोऽप्यसावर्थोऽवभासते[2] ॥ इति ॥
न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते[3] ॥ इति च हरिः॥

इदञ्च वैयाकरणमतं सर्वसंग्राहकत्वान्न केनापि विरुध्यते । एतन्मते च लिङ्गबोधकाष्टावादयः संख्याकारकबोधिकाविभक्तयस्तदर्थद्योतिका एव न वाचिकाः । अतएव चोक्तम्—द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तय इति । अत्र च स्वार्थद्रव्ययोर्जातिव्यक्तिरूपयोर्नामार्थत्वे न कस्यापि विमतिः, कयाऽपि विघयाऽस्वीकारात् । लिङ्गस्यापि

१. ( श० श० प्र० का० १६, पृ० सं० ७६ ) ॥ इति ॥
१. ( वै० भू० सा० ना० नि० प्र० का० १ ) ॥ इति ॥
२. ( वै० भू० सा० ना० नि० प्र० का० २६ ) ॥ इति ॥
३. ( वा० प० ब्रह्म का० १।१२३ ) ॥ इति ॥

नामार्थत्वमेव युक्तम् । लिङ्गबोधकप्रत्ययविशिष्टस्यापि नामत्वात् । तदुक्तम्--प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति । संख्याकारकयोस्तु विभक्त्यर्थत्वमेव युक्तम् । द्व्येकयोर्द्विवचनैकवचने बहुषु बहुवचनम् इत्यादिव्याकरणसूत्राणां शक्तिग्राहकत्वस्यैवौचित्यात् ।

तदुक्तमभियुक्तैः —

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः ॥ इति ॥

विभक्तीनां वाचकत्वं द्योतकत्वं वेतिविषयमुपक्षिप्य विस्तरेणादिङ्निर्देशः कृतो व्युत्पत्तिवादे प्रथमाकारकप्रकरणशेषे इति तत् एव द्रष्टव्यमत्र तु ग्रन्थगौरवाभियानेनोद्ध्रियते । भाष्येऽप्युक्तम्—"मनुष्योऽयं प्रातरुत्थाय-स्वशरीरकार्याणि करोति ततः सुहृदां ततः संबन्धिनामर्थानामपि जातिव्यक्तिलिङ्गसंख्याकारकाणांबोधक्रमःशास्त्रकृत्कल्पितः, तद्बोधक्रमेणैव च तद्बोधकशब्दप्रादुर्भावः शास्त्रकृत्कल्पित" इति ।

---

## ६—जातौ न जातिरिति मतान्तरविमर्शः

घटत्वादिजातिषु घटत्वत्वादिरूपा जातिस्वरूपा वाऽक्षत्रिकगतासु विभीतकत्वादिभ्याप्यासु अक्षत्वजातिषु तिसृषु अक्षत्वत्वरूपा वा जातिर्नास्ति, अपवस्थानात् । जातिबाधकदोषेषु अनवस्थाया अपि परिगणनात् । किञ्च जातौ न जातिः, समवायाभावात् । अतएवा-संबन्धोऽपि जातिबाधक दोषेषु परिगणितः । जातौ समवायाभावश्च समवायानुयोगित्वाभावरूपो न तु समवायप्रतियोगित्वाभावरूपः । घटः पट इत्यादिप्रतीतिविरोधात् । किञ्च घटत्वादिषु सर्वासु जातिषु यदि जातित्वरूपा जातिः स्वीक्रियते तथापि तस्यानित्यत्वे सति एकत्वे सति अनेकसमवेतत्वरूपायाः पदार्थान्तरघटितत्वेन जातिरूपत्वासंभवः । जातेरखण्डत्वात् इति । घटत्वगतं घटत्वत्वं न जातिरेकव्यक्तिवृत्तित्वात् ।

---

## ७—जातावपि जातिरिति वैयाकरणमतविमर्शः ।

वैयाकरणास्तु जातावपि जातिरस्तीति मन्यन्ते । तथा हि—भिन्नासु घटव्यक्तिषु अभिन्नस्य घट इति प्रत्ययस्य दर्शनेन यथा घटत्वं जातिः सिध्यति तथा भिन्नास्वनुघटत्वादि जातिषु जातिरिति अनुगतप्रत्ययदर्शनेन जातिष्वपि जातित्वरूपा जातिरस्तीति प्रतीयते । रथाक्षद्यूताक्षविभीतकाक्षगतासु भिन्नासु अक्षत्वजातिषु अभेदप्रत्यनियामिकाक्षत्वत्वजातिरस्तीति प्रतिभाति ।

---

## ८—विशेषेष्वपि जातिरस्ति न वा ।

तत्र नित्यद्रव्याणामणूनाञ्च परस्परव्यावर्तकाः परस्परञ्च स्वतो व्यावृत्ताविशेषा इति नैयायिकाः । तन्मते स्वतो व्यावृत्तत्वादेव तेषु जातिर्नाभ्युपेयते । फलाभावादनुमतप्रत्ययाभावाच्च । किञ्च तेषु जातिनियामकस्य समवायस्याभावादपि न जातिः । सामान्यमेकत्वकरं विशेषस्तु पृथक्त्वकृत् इति वादिनां वैद्यानान्तु विशेषेषु विशेषत्वरूपा जातिरस्त्येव । जातिसाधकस्य अनुगतप्रत्ययस्य तत्र सत्वात् । विशेषस्तु पृथक्त्वकृत् इत्यंशोऽव्याख्यात एवं चरकटीकायाम् चक्रपाणिकृतायाम्—

सामान्यमेकत्वकरं विशेषस्तु पृथक्त्वकृत् ।
तुल्यार्थता हि सामान्यं, विशेषस्तु विपर्ययः ॥

अथ किं लक्षणं सामान्ययं किं लक्षणो वा स विशेष इत्याह—सामान्यमित्यादि । एकत्वकरमिति एकत्वबुद्धिकरं सामान्यं यदनेकासंभिन्नदेशकालासु गवादिव्यक्तिषु "अयं गौरयं गौः" इत्यादिप्रकारा एककारा बुद्धिस्तत् सामान्यम् । न हि भिन्नासु व्यक्तिष्वभिन्नं सामान्यमेकरूपं विनाऽऽभ्रान्ता एकाकारा बुद्धिर्भवतीति भावः । यत्रापि च "अयं पाचकोऽयं पाचकः" इति तथा "अयं शुक्लोऽयं शुक्लः" इत्यादौ क्रियागुणादिसामान्यादेकरूपा बुद्धिस्तत्रापि सामान्यमेव क्रियागुणादिगतमेकरूपाध्यवसाये हेतुः ।

न ह्येकस्मिन् पाचके या क्रिया सा पाचकान्तरेऽपि किं तर्हि तज्जातीया। अतः क्रियासामान्यं तत्राप्येकत्वाध्यवसाये कारणम्। विशेषलक्षणं पृथक्त्वकृदिति। व्यावृत्तबुद्धिकृत्, तेन यद्गोव्यक्त्यन्तरापेक्षयैकबुद्धिकर्तृतया गोत्वं सामान्यं, तदेव गोत्वमश्वाद्यपेक्षया व्यावृत्तबुद्धिकर्तृत्वाश्वादीन् प्रति विशेष इत्युक्तं भवति। तेन मांसत्वं मांसं प्रति मांसान्तरापेक्षया समानत्वाद् वृद्धिकारणं भवति, तदेव तु मांसत्वं वातं प्रति विशेषरूपतया ह्रासहेतुर्भवति, शोणितादीन् प्रतित्वविरोधि विशेषत्वेन न तथा ह्रासकारणं, गुणसामान्यात्तु वर्धकमपि मांसं शोणितादीनां भवति। कथमनेकासु व्यक्तिषु सामान्यमेकबुद्धिमव्यभिचारिणीं करोतीत्याह—तुल्यार्थता हीत्यादि तुल्यार्थता एकसामान्यरूपार्थानुयोगिता।

एतेन तस्माद्भिन्नासु व्यक्तिषु सामान्यमेकरूपसम्बन्धमस्ति, ततस्तदनेकार्थावलम्बा सत्यपि व्यक्तिभेदे एकबुद्धिर्युक्तेति भावः।

विशेषस्तु विपर्यय इति अतुल्यार्थता हि विशेषत्वम्, तेन गोगजयोस्तुल्यगोत्वगजत्वरूपार्थयोः पृथग्बुद्धिर्युक्तैवेति दर्शितं भवति।

अन्ये तु व्याख्यानयन्ति यत्—त्रिविधं सामान्यम्, विशेषश्च त्रिविधः यथा द्रव्यगोचरः गुणगोचरः कर्मगोचरश्च, तत्र सर्वदेत्यादिना द्रव्यसामान्यमुच्यते सामान्यमेकत्वकरमित्यनेन गुणसामान्यं यथा—पयःशुक्र्योर्भिन्नजातीययोरपि मधुरत्वादिगुणसामान्यं तत्रैकतां करोति, एवं विशेषेऽप्युदाहार्यतुल्यार्थतेत्यादिना तु कर्मसामान्यं निगद्यते। अस्या रूपं हि कर्म न श्लेष्मणा समानमपितु पानीयादिकफसमानद्रव्यार्थक्रियाकारित्वात् कफवर्धकरूपतया अस्याऽपि कफसमानेत्युच्यते, एवं स्वप्नादावपि कर्मणि बोद्धव्यम्। तदेतद्भट्टारहरिश्चन्द्रेणैव दूषितं यतः सर्वदेत्यादिनैव लक्षणेन त्रिविधमपि सामान्यं लभ्यते तेनास्मिन् पक्षे सामान्यमेकत्वकरमित्याद्यवाच्यं स्यादिति कृत्वा अन्ये तु पश्यन्ति—यत्त्रिविधं सामान्यम्—अत्यन्तसामान्यं मध्यसामान्यम्, एकदेशसामान्यं

च, तत्र सर्वदेत्यादिनाऽत्यन्तसामान्यमुच्यते। सामान्यमेकत्वकरमित्यनेन मध्यसामान्यं तुल्यार्थताहीत्यादिनैकदेशसामान्यम्।

एतदपित्रैविध्यकथनं जातिप्रयोजनमसंगतलक्षणं चेति नातिश्रद्धाकरम्। केचित् सामान्यं द्विविधमिच्छति, उभयवृत्ति तथैकवृत्ति च तत्र मांसं मांसवर्धकम्, उभयवृत्ति सामान्यात्, मांसत्वं हि पोष्ये पोषके च गतत्वादुभयवृत्ति, एकवृत्ति तु यथा—घृतमग्निकरम् तथा धावनादिकर्म वातकरं तथाऽस्थ्यादि कफकरम्, एतद्धि सर्वं न वर्धनीयेन समानं, किन्तु प्रभावाद्वर्धकं, प्रभावश्च घृतत्वधावनत्वादिरेव। स चैकवृत्तिसामान्यरूपः तेनात्रापि सामान्यमेव वृद्धिकारणमिति ब्रुवते। अस्मिस्तु पक्षेऽनुभयवृत्तिसामान्यं विशेष एव भवति, तथा समानमसमानं च वृद्धिकारणं भवतीति न किंचित् सामान्यस्योक्तं स्यात्। अस्मन्मते तु सामान्यं वृद्धौ कारणमेव भवतीति सामान्यं वृद्धिकरणत्वेन नियम्यते। न तु वृद्धिः सामान्यकारणिकैवेति नियम्यते, तेना समानादपि वृद्धिर्भवति निर्दोषा। यत्तूच्यते कर्म सामान्यं नेह तन्त्रे वृद्धिकारणमस्ति यतो न धावने न वायुः समान इति अतएवाचार्येण द्रव्यसामान्यमुक्तं "मांसमाप्यायते मांसेन"[1] इत्यादिना, तथा "समानगुणानामाहारविकाराणमुपयोगः"[2] इत्यादिना गुणसामान्यमुक्तं, नैवं कर्मसामान्यमुक्तं वचनं हि "कर्मापि च सद्यस्य धातोर्वृद्धिकरं तत्तदासेव्यम्[3]" इति न तत्र सामान्योपग्रहः कृतः। अत्र ब्रूमः कर्मणां प्रायः प्रभावेणैव वृद्धिहेतुत्वात् सामान्यानुपग्रहः कृतः न तु कर्मसामान्याभावात्, यतः क्रियावतो वातस्य क्रियावता व्यायामादियुक्तेन शरीरेण वृद्धिः क्रियते, निष्क्रियतया चास्य वातस्य ह्रासः। स्वप्नादयस्तु "संयोगे च विभागे च" इत्यनेन वक्ष्यमाणलक्षणेनानुक्ता अपि शास्त्रव्यवहारात् कर्मशब्देनोच्यते। तत्र स्वप्नः स्वकारणादेव

---

१. (शा० स्था० अ० ६)॥ इति॥
२. (शा० अ० ६)॥ इति॥
३. (शा० अ० ६)॥ इति॥

चीयमानस्य कफस्य क्षणकारणशरीरपरिस्पन्दादिनिरोधकत्वेन वृद्धिकर उच्यते, न तु स्नप्नः साक्षाच्छ्लेष्मवृद्धिं करोति।

एवं मात्स्यादावपि चिन्तनीयम्। यत्र त्वेवं कारणं चिन्तयितुं न पार्यते तत्र प्रभाव एव वर्णनीयः। ननु मासं मासं वर्धयति सामान्यात् विशेषाच्च वातं क्षपयति तत्कथं युगपद्विरुद्धार्थद्वयकर्तृत्वं मांसस्य, नहि देवदत्तो यदैव कुम्भं करोति तदैव काण्डमपि।

नैवं क्रियावतामयं धर्मो नाऽक्रियावतामिति, तथा हि—शब्दो युगपदनेकानेव शब्दानेककालमारभते, तथाऽग्निः प्रकाशदाहौ युगपत् करोति, अतएवोक्तमाचार्येण "तस्माद्भेषजं सम्यगवधार्यमाणं युगपदूनातिरिक्तानां धातूनां भवति साम्यकरं भवति, अधिकमपकर्षति, न्यूनमाप्याययति"[1] इति।

यदुच्यते—

क्षीयमाणधातोर्वृद्धस्य तथा बहुदोषस्य समानगुणोऽप्याऽऽहारो न वृद्धिहेतुः, तथा ग्रीष्मे च मधुरादिनां समानेनापि न कफाभिवृद्धिरित्यादिः, तत्र प्रतिबन्धकानां जराबहुदोषत्व-ग्रीष्मोष्णत्वादीनां विद्यमानत्वान्न सामान्यं वर्धकम्, असति च विरोधके सामान्यं वृद्धिकारणमिति सिद्धान्तः, तेन काचित् क्षतिः। किं वा वृद्धादीनां समानेनाहारेण क्रियत एव वृद्धिः।

परमति बलवता क्षयहेतुनाऽऽधीयमानक्षये पुरुषे सा वृद्धिर्नोपलभ्यते। अत्र च द्रव्यसामान्यमेव धातूनां द्रव्यरूपाणां वर्धकं न गुणसामान्यं, गुणानां द्रव्यानारम्भकत्वात्। गुणसामान्यात्तु तद्गुणाश्रयं द्रव्यमनुमीयते तच्च द्रव्यं धातुवर्धकं भवति यथा—रूक्षादीनगुणान् दृष्ट्वा चित्रको वाय्वधिको योऽनुमितः स च चित्रक उपयुक्तो वातं

---

१. ( शा० अ० ६ ) ॥ इति ॥

वर्धयति, गुणास्तु गुणानेव जनयन्तोऽभिवर्धयन्ति। सामान्यं च वृद्धिकारणलक्षणं न साक्षाद्वृद्धिकारणमिति प्रागेवोक्तम्, एवं विशेषेऽपि। अयं च सामान्यविशेषवादो ग्रन्थविस्तरभयादायुर्वेदोपयुक्तधर्ममात्रेणोक्तः[1], विस्तरस्त्वस्य वैशेषिके बोद्धव्यः।

॥ इति तृतीयोऽध्यायः ॥

---

१. (च० सं० सू० स्था० ४५, अ० १, चक्र० टी० पृ० सं० १०।११) ॥इति॥

## अथ चतुर्थोऽध्यायः

# जात्याकृतिविमर्शः

### १—अथ जात्याकृतिविमर्शः

तत्र जात्याकृतिव्यक्तयः पदार्थं इति गौतमसूत्रम्। तत्र जातिर्नित्या एका अनेकसमवेता च शब्दप्रवृत्तिनिमित्तं गोत्वादिका। आकृतिस्तु आक्रियते—प्रत्यक्षीक्रियते—अभिव्यज्यते जातिर्यया इति व्युत्पत्त्या जातेरभिव्यञ्जिका अनुगतसंस्थानरूपा आकृतिग्रहणाज्जातिरित्यादौ। क्वचित्तु आक्रियते व्यावर्त्यंते व्यक्तिर्यया साऽऽकृतिरिति व्युत्पत्त्या जातावपि आकृतिपदस्य प्रयोगो दृश्यते। यथाऽऽकृत्यधिकरणे मीमांसायाम्। क्वचित्तु आक्रियते आकृत्याऽनुगतसंस्थानरूपया व्यावर्त्यंते इति व्युत्पत्त्याऽऽकृतिराकारः स्वरूपम्। तथा च कालिदासः—

किमिव हि मधुराणां मण्डनं नाकृतीनाम् इति।

तत्र जातिस्त्रिविधा परा—अपरा—परापरा चेति। तत्र परत्वं व्यापकत्वरूपम्। अपरत्वन्तु व्याप्यत्वरूपम्। तदुक्तं श्रीविश्वनाथेन—

व्यापकत्वात्पराऽपि स्याद् व्याप्यत्वादपराऽपि च इति।

तत्र परासत्तारूपा एकैव । अपरा तु घटत्वादिरूपा अन्त्यावयविमात्रगता। परापरा तु आपेक्षिकं व्यापकत्वं व्याप्यत्वञ्चादाय द्रव्यत्वपृथिवीत्वादिरूपा इति ।

---

## २—जातिभेदाभेदबिमर्श

तत्र सत्तामात्रं ब्रह्मैव सर्वत्रानुगतं जातिरेकैव, तया तयाऽऽकृत्या तेन तेन द्रव्येण वा व्यवच्छिन्नं तदेव ब्रह्मगोत्वघटत्वादिकविविधाजातिरूपतया प्रतीयते इति ब्रह्माद्वैतवादिनः। अतएव सन् घटः सन् पटः, सन् मठः इत्यादिकासु प्रतीतिषु सर्वजातिव्यापिका सत्ता तद्व्याप्याश्च घटत्वादिका जातयः प्रतीयन्ते । प्रपञ्चितं चैतदत्रैव प्रागिति नेह प्रतन्यते । इत्येवं जातीनां वस्तुतोऽभेद एवेति । द्वैतिनस्तु सर्वेऽपि यथाप्रत्यक्षं यथाऽनुमानञ्च जातीनां भेद एव। अबाधितभेदप्रत्ययादिति वदन्ति ।

---

## ३—अथ जातिव्यञ्जकविमर्शः

तत्र जातेर्व्यञ्जकः संक्षेपेण त्रिविधः कस्याश्चित् स्वाश्रयगतासाधारणो गुणः। कस्याश्चित्तु अवयवसंस्थानम् । कस्याश्चित् उपदेशः ।

तत्र पृथिवीत्व, जलत्व, तेजस्त्वादि जातीनाम् अभिव्यञ्जकः —

१. प्रथमः—आश्रये गन्धग्रहणेन हि सर्वत्र पृथिवीत्वजातिरभिव्यज्यते । न तु संस्थानेन । पृथिव्याः संस्थानस्यानियतत्वात् ।

एवं जलत्वं शीतस्पर्शरूपेण सांसिद्धिकद्रवत्वरूपेण वा स्वाश्रयगताऽसाधारणगुणेन अभिव्यज्यते। न तु संस्थानेन। वापी, कूप, तडागादिसंस्थानानामनियतत्वात् ।

एवं तेजस्त्वमपि स्वाश्रया साधारणगुणाभ्याम् औष्ण्यप्रकाशाभ्याम् प्रत्येकं समुदिताभ्यां वा अभिव्यज्यते। न तु संस्थानेन। सूर्य-चन्द्र-वह्न्यादिसंस्थानानामनियतत्वात्। प्राणिगतजातिष्वपि काश्चिज्जातयः उपदेशग्राह्याः। तासाम् उपदेशोऽभिव्यञ्जकः। यथा—ब्राह्मणत्वादिका वर्णजातयः। कश्चित्तु संस्थानग्राह्यः यथा – मनुष्यत्व – सिंहत्व-गोत्वाश्वत्वादयः।

तत्र पृथिवीत्वादिजातीनां संस्थानं नाभिव्यञ्जकमित्येतदुक्तं हरिणा—

पृथिव्यादिष्वभिव्यक्तौ न संस्थानमपेक्षते।
अनुच्छिन्नाऽऽश्रयाज्जातिरनित्येऽप्याश्रये स्थिता[१] ॥ इति

व्याख्यातञ्चैतद् हेलाराजेन[२]—

पृथिवीत्वाप्त्वतेजस्त्वादयो जातिविशेषाः प्रतिनियतावयव-रचनानपेक्षा एव महति परिमिते—चाश्रयाऽभिव्यक्तिमासादयन्ति। तथा हि—लोष्टोऽपि पृथिवीरूपेण प्रतीयते, मृत्ससमूहोऽपि घटोऽपि पर्वतोऽपीत्यादि। एवं समुद्रोऽपि बिन्दुरपि चोदकत्वेन प्रतीयते इत्यादि वाच्यम्। क्वचित्तु गोत्वादिका सालत्वतालत्वादिका च जातिः संख्यानमभिव्यक्तौ नियतमपेक्षत एवेत्यर्थादुक्तं भवति। तथा समवेतत्वेऽपि न गुणवादाश्रयविनाशमनुविनश्येयुः। जातीनां स्वाश्रय-प्रतिबद्धो नात्मलाभः। केवलं प्रतीतावाश्रमपेक्षन्ते ताः। एकव्यक्ति-विनाशेऽपि च तदन्यत्रानुगत संविदन्यथानुपपत्तेरनुमितिसद्भावाज्जातिः समवस्थितैवेति अनुच्छिन्नाश्रयात् आश्रयादुच्छेदोऽस्या नायाति, आश्रयोऽस्या नोच्छेदे हेतुरित्यर्थः। आश्रयश्च विनश्यन्नुच्छेदहेतुः सम्भाव्यत इति नाश्रयविनाशादस्याविनाश इत्यर्थः। तृतीयार्थे वा पञ्चमी। आश्रयेण सह न विनश्यतीत्यर्थः।

---

१. ( वा० प० तृ० का जा स० ३।१।४१ ) ॥ इति ॥
१. ( वा० प० तृ० का० जा० स० हे० रा० टी० ३।१।४४ ) ॥ इति ॥

ब्राह्मणत्वादिजातयः उपदेशग्राह्या। उपदेशस्तासामभिव्यञ्जकः इति तु उक्तम्—

ब्राह्मणत्वादयो भावाः सर्वप्राणिष्ववस्थिताः।
अभिव्यक्ताः स्वकार्याणां साधका इत्यपि स्मृतिः[1] ॥

इति कारिकाव्याख्यानावसरे हेलाराजेन। इत्थं हि तदीयो ग्रन्थः।

भवन्ति सर्वत्रेति भावः ब्राह्मणत्वक्षत्रियत्वादयः सामान्यविशेषा। ते प्राणिषु पिण्डेषु क्षत्रियादिष्ववस्थितत्वात्सर्वगताः। तथापि च "ब्राह्मणमालभते" इत्यातौ न सांकर्यप्रसङ्गः यस्मात्सर्वगतत्वेऽपि प्रतिनियताभिव्यञ्जकव्यङ्गचा इति प्रतीतस्य क्रियाङ्गत्वात् यत्रैवाभिव्यक्तिमासादयन्त्युपदेशादिना व्यञ्जकेन, तत्रैव स्वकार्यसम्पादका इत्यविच्छिन्नगमपारम्पर्येण स्मर्यते। यथा सर्वगतत्वं पारम्पर्यागतं तथा प्रतिनियत व्यञ्जकाव्यङ्ग्यत्वमपीत्यर्थः।

अवयवसंस्थानस्य उपदेशस्य च अभिव्यञ्जकत्वम्—"आकृतिग्रहणा जातिरितिसकृदाख्यातनिर्ग्राह्या" इति च भाष्यकारिकां शाम्यामिति समर्थ्यते। क्वचित् आकारसादृश्यमपि जातीनाम् अभिव्यञ्जकम्। यथा—पूर्वनिर्ज्ञातानाम् गोब्राह्मणादीनां चित्रेषु आकारसादृश्यसंदर्शनेन गोत्वब्राह्मणत्वादेरभिव्यक्तिः। इयं गौः, अयं ब्राह्मण इनि।

जातीनां सर्वासामपि सर्वगतत्वात्। नन्वेवं सति गोचित्रोपघातगोहत्या गोचित्रपूजने च धर्मः स्यात्। एवं ब्राह्मणचित्रेऽपि उपहते पूजिते च इति चेत् ?

न, प्राण्याक्षितानामेव अभिव्यक्तानां जातीनां स्वाश्रयोपघाते स्वाश्रयपूजायाञ्च पुण्यपापयोः निमित्तत्वात्।

तदेतदुक्तं हरिणा—

चित्रादिष्वप्यभिव्यक्तिर्जातीनां केश्चिदिष्यते।
प्राण्याश्रितास्तु ताः प्राप्तौ निमित्तं पुण्यपापयोः[2] ॥

---

१. ( वा० प० तृ० का० जा० स० ३।१।४४ ) ॥ इति ॥
२. ( वा० प० तृ० का० जा० स० हे० रा० टी० ३।१।४४ ) ॥ इति ॥
३. ( वा० प० तृ० का० जा० स० ३।१।४५ ) ॥ इति ॥

व्याख्यातञ्च तद् हेलाराजेन—

आलेख्यनिर्मिते पुस्तकर्मणा दार्वादिना वा कृतेऽपि ब्राह्मणे सादृश्यात्तदाकारानुकारप्रत्ययोदय इति तत्रापि तज्जातिप्रकाशः। प्राण्युपघातात्पुनरधर्म इति चित्रस्थोपघाते तदभावः। एवं धर्मोऽपि चित्रस्थब्राह्मणपूजायां न भवति। केश्चिद् इति वचनादस्वारुचि सूचयति किल। मुख्यसादृश्यात्प्रतिकृतिषु प्रत्यानुगमोपपत्तिर्न तु तद्वशाज्जातिसमवाय इति युक्तम्। तदेवं पूर्वं "निर्वर्त्यमानं यत्कर्म"[1]।

इत्यादिना प्राक् प्रभवनादपि जातेः सदभावान्नित्यत्वमुपादितम्। इदानीं पुनराश्रयध्वंसेऽप्यवस्थानादिति पूर्वापरकोभिगामित्वात् प्राक प्रध्वंसाभावाभ्यामयोगात्परिपूर्णस्य नित्यत्वस्य सिद्धिरिति।

———

## ४—अथ जातिबाधकदोषविमर्शः

ननु जातिप्रतिबन्धकाः के दोषा इति चेत् ?

उच्यते :—

व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथाऽनवस्थितिः।
रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः[2] ॥

बहुवृत्त्येकधर्मस्य सामान्यतया सर्वसिद्धान्तत्वादेकव्यक्तौ जातिरनभ्युपेयेति भावः।

व्यक्तेरभेदः —एकव्यक्तिकत्वम् आकाशत्वादेर्जातित्वे बाधकम्।

तुल्यत्वम्: — तुल्यव्यक्तिवृत्तित्वम् घटत्वं घटत्वकलशत्वादीनां जातीनां भेदे बाधकम्। वस्तुतस्तु तुल्यत्वं स्वभिन्नजातिसमनियतत्वमिति यावत्। तच्च जातित्वबाधकमेवेति ध्येयम्।

१. ( वा० प० तृ० का० जा० स० ३।१।२७ ) ॥ इति ॥
२. ( वै० द० प्र० भा० वि० टी० पृ० सं० ३३ ) ॥ इति ॥

सङ्करश्च —परस्परात्यन्ताभावसमानाधिकरणयोरेत्र समावेशः, भूतत्वादेर्जातित्वे बाधकः, भूतत्वं विहाय मनसि वर्तमानस्य मूर्तत्वस्य, मूर्तत्वम् विहाय गगने वर्तमानस्य भूतत्वस्य च पृथिव्यादिचतुष्टये सत्त्वात्[1]।

ननु साङ्कर्यस्य जातित्वबाधकत्वे किं मानमिति चेत्?

उच्यते —स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्योभयसम्बन्धेन जातिविशिष्टजातित्वावच्छेदेन स्वसमानाधिकरणाभावप्रतियोगित्वाभाव इति नियमस्य भङ्गप्रसंग एवेति। तादृशनियमे मानाभावान्न साङ्कर्यं जातित्वबाधमिति नव्याः।

अनवस्था तु—जातेर्जातिमत्त्वे बाधिका निखिलजातिष्वेकवैजात्याङ्गीकारेऽपि तद्वैजात्ये न वैजात्यान्तरमेकव्यक्तित्वात् तथापि निखिलजातिष्वेकं वैजात्यं तद्वैजात्यं तदाश्रयजातिषु पुनर्वैजात्यमेवमग्रेऽपीत्यनवस्था बोध्या।[2]

रूपहानिः —निःसामान्यगर्भलक्षणव्याघातरूपा विशेषस्य जातिमत्त्वे रूपस्य स्वतो व्यावर्तकत्वस्य हानिः, तत्र जातिस्वीकारे तथैव व्यावर्तकत्वम् वाच्यम्।

सामान्याश्रयस्य सामान्यरूपेणैव भेदसाधकत्वनियमात्।

न च सामान्यरूपेण विशेषाणां भेदसाधकत्वं संभवति व्यभिचारात्, तादृशनियमानङ्गीकारे परमाणुगतैकत्वानां तत्तद्व्यक्तित्वेनैव परमाण्वन्तरभेदसाधकत्वसम्भवेन विशेषस्य वैयर्थ्यप्रसङ्गादिति तु ज्यायः[3]।

असम्बन्धः।—प्रतियोगितानुयोगितान्यतरसम्बन्धेन समवायाभावः समवायाऽभावयोर्जातिमत्त्वप्रतिबन्धक इति बोध्यम्।

---

१. ( सि० मु० दि० टी० पृ० सं० ७४ ) ।। इति ।।
२. ( सि० मु० दि० टी० पृ० सं० ७५ ) ।। इति ।।
३. ( सि० मु० दि० टी० पृ० सं० ७७ ) ।। इति ।।

नन्वेतेषां व्यक्त्यभेदादीनां षण्णाम् जातिदूषकत्वे किं बीजमिति चेत् शृणु ? एक व्यक्तिवृत्तिधर्मस्य आकाशत्वादेः जातित्वेऽनेकसमवेतत्व-रूपस्य लक्षणांशस्य हानिः। तुल्यव्यक्तिवृत्तिधर्मयोः घटत्वकलशत्वयोः पृथग् जातित्वे वैयर्थ्यम्, गौरवञ्च ? संकीर्णयोः द्वयोः धर्मयोः जातित्वे बाधकस्तु समानाधिकरणजातिद्वयस्य समानाधिकरणाभावप्रतियो-गित्वाभावः इति नियमस्य भङ्ग एव। एतन्नियमानङ्गीकारे तु सङ्करस्य न जातित्वबाधकत्वम् इति नव्याः।

रूपहानेर्दूषकत्वं तु स्फुटमेव। असंबन्धस्य जातित्वबाधकत्वे बीजं तु अनेकसमवेतत्वांशस्य अनुपपत्तिः। इति।

॥ इति चतुर्थोऽध्यायः ॥

———

अथ पञ्चमोऽध्यायः

## १. अथाकाशकालादावपि जातिरिति शाब्दिक-सिद्धान्तविमर्शः ।

यद्यपि आकाशमेकम् कालश्चैक इति स्वीकुर्वन्तो नैय्यायिकाः आकाशत्वकालत्वेन जाती, अनेकसमवेतत्वाभावात् इति वदन्ति । कालस्तु क्रियाभेदेन क्षण, लव, काष्ठा, मुहूर्तादिभेदभिन्नोऽपि वस्तुगत्या एक एव इति हि तेषां सिद्धान्तः ।

शाब्दिकास्तु आकाशकालादावपि आकाशत्वकालत्वादिका जातिरस्तीति मन्वते । तथा हि—

यद्यपि आकाशस्य वस्तुगत्या एकत्वमेव तथापि यत्र देशे घटादिना सह आकशस्य संयोगः परिसमाप्तो वर्तते, स प्रदेशो भवति आकाशस्य अनेकः । संयोगस्तु अव्याप्यवृत्तित्वात् परिच्छिन्नवस्तुवृत्तिरिति संयोगस्य नियतदेशतया संयोगिनोऽपि नियतदेशवृत्तय इति संयोगिनां परिमितत्वेन आकाशस्य भवत्येव उपाधिकृतो भेदः ।

देशभेदाच्च आकाशेऽपि आकाशत्वं जातिरस्ति ।

अत एव देशभेदेन इदमाकाशम् इदमाकाशमिति अभिन्नमभिधानं-प्रत्ययश्च । एवं कालादीनामपि प्रदेशपरिकल्पनेन सामान्यमुपवर्णनीयम् । तदेतदुक्तं हरिणा—

संयोगिधर्मभेदेन देशे च परिकल्पिते ।
तेषु देशेषु सामान्यमाकाशस्यापि विद्यते[1] ।

अथवा मुख्या एव आकाशस्य देशाः घटादीनामिव इत्यपि उक्तं हरिणा—

अदेशानां घटादीनां देशास्संबन्धिनो यथा ।
आकाशस्याप्यदेशस्य देशास्संबन्धिनस्तथा[2] ॥

व्याख्यातञ्च तद् हेलाराजेन[3]—

इह देशोऽवयव उच्यते । घटादयश्चावयविनः स्वात्मनि निरवयवाः । ये हि तेषामवयवभूताः कपालादयस्ते आरम्भककारणभूता व्यतिरिक्ता एव समवायसम्बन्धेन सम्बन्धिनः । एवमाकाशमपि केनचिदप्यनारब्धत्वादमूर्तव्यापि निरवयवमित्यात्मभूतदेशाभावाद् द्रव्यादयः संयोगिन एवास्य देशाः, तथा तद्भेदादाकाशभेदे सर्वत्राभिन्नप्रत्ययानुगमाज्जातिपरिकल्पः । आकाशं ह्यवच्छिन्दन्तोऽर्थादेशास्तस्य भवन्ति । तत्कृतावच्छेदं चाकाशमपि तेषामाधारभावापत्तेर्देश इत्यन्योन्यदेशत्वं मूर्तामूर्तयोः मूर्तास्त्वव्यापकाः परस्परमवच्छेदका न भवन्तीत्याधार एवैतेषां देशः इति ।

लघुमञ्जूषायामपि "सा च जातिः सर्वत्र, आकाशजातिसमवायादेरपि औपाधिकाऽनेकत्वात्" इत्युक्त्या आकाशे काले समवाये जात्यादौ च सर्वत्रैव तत्तज्जातीनाम् अभ्युपगमः कृतोऽस्ति । किञ्च

१. ( वा० प० तृ० का० जा० स० ३।१।१५ ) ॥ इति ॥
२. ( वा० प० तृ० का० जा० स० ३।१।१६ ) ॥ इति ॥
३. ( वा० प० तृ० का० जा० स० हे० रा० टी ३।१।१६ ) ॥ इति ॥

ब्रह्मण एव प्रमाणसिद्धतया सर्वे भावाः ब्रह्मणः शक्तिभूता न तु ततो भिन्नाः।

तत्र यथा व्यवहारं शक्तिकल्पना इति सर्वत्रजातिद्रव्यविभागः। आकाशत्वम्, घटत्वम्, इत्यादिव्यवहारस्य तुल्यत्वात्। तत्तत् कर्णशष्कुल्यवच्छिन्ननभस एव श्रोत्रत्वम् इति मते श्रोत्रत्वजातिवत् इत्याद्यपि सप्रमाणं बहूक्तं तत्रैव[1]।

---

२—सर्वत्र शब्दजन्यबोधे शब्दजात्यर्थजात्योः प्रत्ययक्रमविमर्शः।

सर्वत्र घट-पटादिशब्दैः घटत्वादिरूपासु अर्थजातित्वेनाऽभिधीयमानासु सतीसु पूर्वंघटपटत्वादिका शब्दजातिरेव अभिधीयते पश्चात्तु घटत्वादिका अर्थजातिः इति क्रमः।

अन्यथा अर्थजातौ शब्देन अभिधीयमानायां तत्र जात्यन्तराभावात् निर्निमित्ता शब्दस्य प्रवृत्तिः स्यात्।

तच्चानिष्टम्। तदेतदुक्तं हरिणा—

स्वा जातिः प्रथमं शब्दैः सर्वैरेवाभिधीयते।
ततोऽर्थजातिरूपेषु तदध्यारोपकल्पना[1]॥

व्याख्यातञ्चैतद् हेलाराजेन—स्वा असाधारणी आत्मीया गोशब्दत्वादिका न तु सकल शब्द साधारणी शब्दत्वादिः। एवं चाऽसाधारणत्वेन विशेषणतया संबन्धाऽव्यभिचारः शब्दस्यार्थजात्या संबन्धव्यभिचारेऽपीति स्वा जातिः एव मुख्यमभिधेयमित्युक्तं भवति। तथा च वाक्यकारः—

"न वा शब्दपूर्वको ह्यर्थे संप्रत्ययः[२]"

---

१. ( वै० सि० ल० म० स्फो० नि० प्र० पृ० सं० ४६७ )॥ इति॥

१. ( वा० प० तृ० का० जा० स० ३।१।६ )॥ इति॥

२. ( म० भा० प्र० १, पा० १, सू० ६८ वा० )॥ इति॥

अतएवाऽव्यभिचारिण्याः स्वरूपजातेरर्थजात्यभिधाने शब्दस्य नान्तरीयकमभिधानमिति प्रथमम् इत्याह। यदभेदेन यत्प्रतिपत्तिः तदवश्यं तत्र प्रतिपत्तव्यमित्येतावता प्राथम्यम्, न तु क्रमेणाभिधानात्। यद्वा संबन्धव्युत्पत्ति कालाऽपेक्षं प्राथम्यम्।

तथा हि संबन्ध्युत्पत्तिकालेऽर्थजात्या नास्ति सम्बन्धः। तथात्वे वाच्यत्वेन तत्र विनियोगोऽनर्थकः स्यात्, अर्थस्य प्रतिपन्नत्वादिति सोऽर्थस्तावतेन शब्देन न प्रतिपन्नः। यदि च स्वजात्यभिधानं तदानीं न स्यात्। तदाऽनर्थकत्वाद्विभक्तियोगो न स्यादिति।

प्राक् संज्ञिनाभिसंबन्धात्संज्ञारूपपदार्थिका"[1]

इत्युक्तम्। रूपं हि स्वरूपं स्वा जातिर्वेति दर्शनभेदेन कथ्यते। सर्वैः इति। स्वरूपपरैरर्थपरैश्च, तस्या एव स्वरूपतता व्यवहारात्। तथाऽव्युत्पन्नैरपि शब्दरविनाभावाच्छब्दस्वरूपेणावस्थिता जातिः प्रतिपाद्यते। अर्थस्य झटित्येव शब्दस्वरूपा भेदेनावबोधेऽपि यथा प्रतिपादितक्रमाश्रयेण ततः स्वजातिप्रत्यायनादनन्तरमर्थजातीनां गोत्वादीनामात्मसु तस्याः शब्दजातेः समवरोपस्य कल्पना न परमार्थः शब्दविवर्तत्वेनार्थस्य शब्दात्तत्वतो भेदाभावात् इति।

---

## ३—आधुनिकानां मते जातिविमर्शः

यद्यपि आधुनिकाः भौतिकविज्ञानवादिनः प्रत्यक्षमेव एकं प्रमाणं मन्वते इति आपाततः प्रतीयते।

तथापि अनुमानमपि तेषां मते प्रमाणमस्त्येव। अन्यथा कथं गणितेन चन्द्रलोकादिदूरत्वमानपरिज्ञानम्। कथञ्च शब्दप्रकाशयोगेतिवेगतारतम्यपरिज्ञानम्। तदेतत् सर्वं गणितशास्त्रानुसारि गणनाजन्यं

१. ( वा० प० क्र० का० १।६६ )॥ इति॥

ज्ञानमनुमानमेव न प्रत्यक्षम्। अक्षणागोचरत्वात्। तदेवं सिद्धम् अनुमानानुगृहीतं प्रत्यक्षं तेषां मते प्रमाणमिति।

काम एव च एकः तेषां मते पुरुषार्थः तत्साधनत्वाच्चार्थोऽपि। धर्ममोक्षौ तु आद्यन्तौ तेषां मते न स्त एव इन्द्रियाऽगोचरत्वात्।

तथा च जातिरपि तेषां मते नास्त्येव प्रत्यक्षाऽगोचरत्वात्। घटो घटः इत्याद्यनुगतप्रतीतिस्तु अवयवसंस्थानसाम्येनापि उपपादयितुं शक्यते। अतएव जातिकार्यम् आकृत्यैव निर्वोढुं शक्यते।

इतरव्यावृत्तिरपि न जातिकार्यं किन्तु आकृतिकार्यमेवेति ब्राह्मणत्वादेजातिसिद्धौ मानाभावः। धर्मशास्त्राण्यपि न प्रमाणानि तेषां विषयस्य अप्रत्यक्षत्वात्।

नास्ति ब्राह्मणचाण्डालयोः कश्चन कर्मभेदः अधिकारभेदो वा, संस्थानसाम्यात्। प्रभवन्ति हि अन्त्यजा अपि सत्कृत्य अध्यापिता विविधा विज्ञानपद्धतीरुपदेष्टुम्। श्रूयते च भारतादिषु सूतः संकीर्णजातीयो व्यासासनमध्यारोपितः। श्रूयते च मतङ्गो नाम ऋषिः चाण्डालः। श्रूयते च अक्षमाला चाण्डालकन्या वशिष्ठेन सत्कृत्य उपभुक्ता। श्रूयते च किरातवेषस्य हरस्य मातङ्गी देवी सती भार्या।

श्रूयते रविदासः किल अन्त्यजन्मा परमतापसः। विदेशेष्वपि यस्यां कस्याञ्चिद्योनौ समुत्पन्नाः महर्षिकल्पा मांस-मदिरा-सेविनोऽपि अद्भुतानां विज्ञानविषयाणामाविष्कर्त्तारः विभूषयन्ति हि ते चन्द्रलोके यानेन अवतरीतुम् प्रभवन्ति खलु नाना विधास्त्रैः मेदिनीं दारितुं समुद्रमपि शोषयितुम्।

तस्माद् ज्ञानमेव परमस्य पूतत्वस्य पूज्यत्वस्य च कारणम्, न जातिः तदुक्तं भगवता—

"न हि ज्ञानेन सदृशं पवित्रमिह विद्यते।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति"[1] ॥ इति ॥

---

१. ( गी० अ० ४ श्लो० ३८ ) ॥ इति ॥

यदि जातिः स्वाश्रय-व्यक्ति-माहात्म्यसम्पादिका स्यात् तदा कथमिदानीं ब्राह्मणाः देशविदेशे समाजे च अवमान्यन्ते। कान्दीशीकावृत्तये दशसु दिक्षु परिभ्राम्यन्ति परिश्रान्ताः। विद्या-बुद्धि-वृत्तिविहीनाश्च नाना विधानि दुःखानि असह्यानि अनुभवन्ति। अतो देहस्य फेनकतैल-जलादिभिः वस्त्रभूषादिभिः नानाविधैः केशप्रसाधनैः बाह्यं शौचं मनसः प्रसादनं श्रुताभ्यासशिक्षादीक्षादिभिः देशाटनेन बहुज्ञ-सम्भाषादिभिश्च मानसं शौचं विविध-ज्ञानविज्ञानसम्पादकं व्यक्ति-महिम्नि मूलं न जातिरिति।

किञ्च विदेशेषु नास्ति जातिभेदः। किन्तु देशनिमित्तिका एकैव जातिः। "अंग्रेजी" इति "फ्रेञ्च" इति "जर्मन" इति। जातेरैक्ये च परस्परं द्वेषाल्पत्वं देशभक्तिश्च दृश्यते। भारते च जातिभेदेन परस्परं द्वेषः देशानुरागापकर्षकोऽनुभूयते।

जातिश्च व्यवहारार्थं कल्पितैव न नित्या यथा—"अमेरिकन" जातिरिति। भारतीयाश्च "इण्डियन" इति बहुविधा जातीया अपि। अतएव बौद्धाः कल्पनाऽपोढमिति जात्याख्यस्य सामान्यस्य नामनिर्दिशन्ति। कल्पनारूपस्य अपोहस्य विभ्रमस्य विषयीभूतम् इति तदर्थः। तस्माज्जातिः कल्पितैव न वस्तुभूता। सा च व्यवहाराऽनुरोधेनैव कल्पनीया न तु व्यवहारविरोधेन।

अतः साम्प्रतं जातिभेदो बह्वनर्थकरः परित्याज्यः इति।

———

## ४—अथ जातिविषये आधुनिकमतनिरासः

तत्र अस्ति जातिरिति वदतां प्राचामयमभिप्रायः। अस्ति हि शब्दस्य अर्थेन सह औत्पत्तिकः सम्बन्धः। अस्ति च जातिशब्दो व्याकरणबोधितसाधुताकोऽनादिर्लोके प्रयुज्यमानः। अतोऽस्ति तत्सम्बद्धः तदर्थोऽपि अनादि इति निश्चीयते।

यद्यपि व्याकरणेन "जननं जातिरिति" भावे "भावे "क्तिन्" प्रत्ययो जायमानः स्वान्तस्य शक्यं जन्मरूपम् अर्थम् अभिधत्ते। न तु सामान्यरूपम्। तथापि जननेन प्राप्यते जातिरिति भाष्यव्युत्पत्त्या जननकारणकप्राप्तौ जन् धातोर्लक्षणायां ततः "कर्मणि बाहुलकात् क्तिन्" प्रत्यये निष्पन्नो जातिशब्दो नित्यं सामान्यं व्यक्तिजन्मकाले एव तया सम्बध्यमानम्—अभिधत्ते इति प्रतीयते। एतस्य च जातिशब्दस्य वाच्यमर्थद्वयम्। नित्यसामान्यरूपः एकोऽर्थः। द्वितीयस्तु व्यवहारार्थकल्पितः सादिः। यथा मनुष्यशब्देन अभिधीयमानो मनुष्यत्वरूपं सामान्यं अनादिरर्थः। अतएव नित्यम्। मनुष्यव्यक्तिप्रवाहस्य अनादित्वात्। द्वितायं च कल्पितं सामान्यकल्पनाऽऽपोढमिति बौद्धाः प्रवदन्ति। ता एव च कल्पिताः जातयः "अंग्रेज" "जर्मन" "फ्रेञ्च" "इण्डियन" "अमेरिकन" इत्यादयः "मुसलमान" "यहूदी" इत्यादयश्च। ब्राह्मणत्वादयो जातयस्तु अनादौ अपौरुषेये वेदे समुपलभ्यमाना अनादय एव।

न हि ब्राह्मणादीनाम् इदं प्रथमः कश्चन इतिहासः क्वचिदपि श्रूयते स्मर्यते वा।

माठरत्वकौण्डिन्यत्वादयस्तु गोत्रजातयः कल्पिता-अकल्पिताश्च। तत्राद्यः दत्तक-पालित-क्रीतकादिषु पुत्रेषु गोत्रमरिभ्रंशदर्शनात् तथा च स्मर्यते "गोत्ररिक्थे जनयितुर्नो दद्याद् दत्तकः सुतः" पालिते च शुनःशेपादौ विश्वामित्रादिगोत्रपरिग्रहो दृश्यते शास्त्रेषु।

अकल्पिता तु औरसानाम्। यत्तु आधुनिकाः वदन्ति नास्ति जातिः अप्रत्यक्षत्वादिति। तन्न।

अयं मनुष्यः इत्यादिरूपेण व्यक्तिविशेषणतया जातेः प्रत्यक्षत्वात्। अस्मिन् प्रत्यक्षे किं विशेष्यं विशेषणञ्च प्रत्यक्षगोचरतया भासते।

"नागृहीतविशेषणा बुद्धिर्विशेष्यमुपसंक्रामति" इति न्यायात्।

"रजकः चर्मकारश्च नटो बुरुड एव च'।

कैवर्तमेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृताः।

इति स्मृतिबोधिताः सप्त अन्त्यजजातयोऽपि कल्पिता एव। तथा हि—

अपौरुषेये वेदे ब्राह्मणत्वादयः चतस्र एव वर्णजातयः समुत्पन्नाः वर्ण्यन्ते संसारानादित्वाच्च ताः प्रवाहरूपेण अनादयः। अतः स्वरूपेणापि नित्या इति निश्चीयते।

व्यक्तीनां समुत्पत्त्या तु तासां समुत्पन्नत्वव्यवहारो वेदे। प्रागुक्ताः अन्त्यजजातयस्तु परस्परं संकीर्यमाणासु वर्णजातिषु सतीषु समुत्पन्नाः व्यवहारार्थम् कल्पिताः प्रतिलोमसंकरजा इति नाविदितं स्मृतिविदाम्। ताश्च संकीर्णजा इति व्यवहारेषु निन्द्याः। स्मृत्यनुसारञ्च ता अधुनाऽपि समुत्पद्यन्त इति वक्तुं शक्यते।

एताश्च स्मृतयः समाज-नियमनाय पुरुषधौरेयैः महर्षिभिः कल्पितान् अवमन्तुमर्हाः। अन्यथा समाजे निर्बाधः संकरः अनुलोमतः प्रतिलोमतश्च प्रसज्येत। पशुषु यथा "आचतुरं हि इमे पशयो मिथुनीयन्ते" माता पुत्रेण सह मिथुनं गच्छति, पौत्रेण प्रपौत्रेणापि, इतिवत् मनुष्येष्वपि निर्बाधो मैथुनव्यवहारो जातिसंकरकारकः स्यात्।

गर्हितश्च तादृशो व्यवहारः पाश्चात्येष्वपि भौतिकविज्ञानवादिषु निन्दितश्च सङ्करदोषो भगवताऽपि—

सङ्करो नरकायैव कुलघ्नानां कुलस्य च[1]। इति।

दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः॥ इति च[2]॥

वशिष्ठस्य तु अक्षमालासम्बन्धो दुस्साहसात् कृतो नाद्यापि समाजेन आदृतो दृश्यते, अतः परिहर्तव्य एव।

मतङ्गऋषौ तु ब्राह्मणजातीये मातङ्गत्वस्य अतिदेशः इति चिरन्तनेतिहासदर्शनतोऽवसीयते। व्यवहारार्थः हि यथा—विश्वामित्रादेः क्षत्रियजातीयस्य ब्राह्मणत्वमतिदिष्टं कल्पितं यथा मतङ्गादेः ब्राह्मणस्य मातङ्गत्वमतिदिष्टं कल्पितमिति। तत्तदकाले तत्तज्जात्युचिताश्च मालिन्याऽपहारका उत्कर्षाधायकाश्च संस्काराः।

---

१. ( गी० अ० १, श्लो० ४२ )॥ इति॥
२. ( गी० अ० १, श्लो० ४३ )॥ इति॥

मण्यादेः निघर्षणादिः इव धर्मशास्त्रेषु तत्र तत्र दृश्यन्ते। संस्कारैर्हि बीजसमुद्भवं गर्भसमुद्भवञ्च मलम् अपनीयते इति स्मर्यते।

"एवमेनः शमं याति बीजगर्भ-समुद्भवम्" इति।

अतः सर्वेषां संस्काराणामशक्तौ केचन प्रधानीभूताः संस्काराः देशकर्मरूपाः यथाकथञ्च कर्तव्या एव शिष्टैरिदानीमपि क्रियमाणाः। दृश्यते हि कुटिलस्य कौटिलस्यापि संस्कारेषु श्रद्धा। राजकुमाराणां संस्कारान् आवश्यकान् कौटिल्यीयेऽर्थ शास्त्रेऽभिदधतः।

प्राचीनाश्च संस्कारसम्पन्नाः विद्वांसः भारतीयाः राघवानन्दादयः सांधिविग्राहिकाः अष्टादशभाषा - वारविलासिनीभुजङ्गमाश्च उपवर्णिताः साहित्यदर्पणे। नहि तत्तज्जात्युचिताः संस्काराः विज्ञान-विद्यां प्रतिबध्नन्ति इति वक्तुं शक्यते। विद्यानां गुरूपदेशाधीनत्वात्। शिष्यजिज्ञासातिशयसाध्यत्वाच्च। श्रूयते हि सनातनधर्ममानिनः कुमारिलस्य जैनादिगुरोः विद्याग्रहणम् तन्मतप्रत्याख्यानञ्च। नहि पादायामे अर्धोरुके (अर्धो बाहुके वा) शिखाविनाशे वा भौतिकी विद्या प्राप्तुं शक्यते नान्यथा इति वक्तुं शक्यते। नहि यज्ञोपवीतेन प्रतिबद्धा विज्ञानविद्या न स्पन्दितुं प्रभवति इत्यपि वक्तुं शक्यते। विद्यास्तु मन्ये मनसः संस्कारातिशयम् अपेक्षन्ते। न वस्त्रभूषे न फेनकं न वा परितः श्मश्रुमुण्डनं न वा बृहन्तं भाण्डानुकारिणं पटाटोपम्।

तस्मात् परः शतसहस्रेभ्यो वर्षेभ्यः सुपरीक्षिता जातिव्यवस्था भव्येयम् नाभिभाव्यो विभावकैः इत्यर्थये।

---

## ५—अथ जातिसंरक्षणस्योपयोगिता।

यद्यपि भारतीयाः पाश्चात्यशिक्षादीक्षिताः जातीरामूलतः उन्मूलयितुं प्रवृत्ता दृश्यन्ते। जातीश्च परस्परविद्वेषकारणं देशाधोऽध्र'शकारणञ्च वदन्ति। तथापि जातिसंरक्षणमावश्यकम् इति वयं प्रतिजानीमहे। तथा हि—जात्यभिमानः कुलाभिमानः देशाभिमानः इति त्रितयं पुरुषेषु

गौरवं शौर्यञ्च प्रवर्धयति । विद्याग्रहणे च यत्नमुत्कर्षयति । कलासु अभ्यासं प्रकर्षयति । असाधुकर्मभ्यो निवर्तयति ।

दृश्यन्ते हि अद्यापि क्षत्रियाः सिक्खजातीयाश्च रणाङ्गणे प्राणैः खेलन्तः शत्रून् पराभवन्तः संग्रामकुशलाः दृश्यन्ते च कुलाभिमानिनः समरेषु प्राणान् परित्यजन्तः स्वकुलजानां गौरवं स्मरन्तः । नीतिज्ञा अपि कुलाभिमानं गौरवहेतुं प्रवदन्ति । तद्यथा—

"शूरोऽपि कृतविद्योऽसि दर्शनीयोऽसि पुत्रक ।
यस्मिन् कुले त्वमुत्पन्नो गजस्तत्र न हन्यते ॥" इति ।

देशाभिमानादेव पाश्चात्यदेशीयाः इदानीमपि एशियावासिनोऽपि-समुत्कर्षं प्राप्नुवन्ति । तत्तज्जातीयानाञ्च तत्तज्जात्युचिता शिक्षा स्वगृहेषु सम्पाद्यते । न तु तेषां शिक्षायै विद्यालयाः महाविद्यालया वा भारते विरचिता विरच्यन्ते वा । यथा—तक्षायस्कार-कुम्भकार-तन्तुवाय-रजक-चर्मकर-नापितादि-जातीयानां तत्तत्कलानां शिक्षायै नाद्युनाऽपि विद्यालयाः विरच्यन्ते ।

जातिस्वभावत एव ते तासु कलासु परमप्रावीण्यमाप्नुवन्ति ।

अद्युनाऽपि वणिजः जातिस्वभावप्राप्तवाणिज्यबुद्धिप्रकर्षाः साम्प्रतं-नियुक्तान् महत्या शिक्षया दीक्षितानपि वाणिज्याऽधिकारिणो वञ्चयन्ति ।

भारते च पूर्वं जातीनां वर्गीकरणे नैव जीविकाश्च निर्दिष्टानि लोकेऽपि अबाधितप्रसराणि आसन् । इदानीं च जातीरनादृत्य परस्परं कर्मविनिमयेन प्रवर्तमाना जीविकामन्विष्यन्तोऽहर्निशं क्लिश्यन्ति । तथा हि—ब्राह्मणाः क्षत्रकर्म समाश्रयन्तो नानाविधानि शस्त्राण्यस्त्राणि च धारयन्तः समरभुवमवतरन्ति । क्षत्रियाश्च प्रजापालनाद्विरक्ता अध्यापनपरायणाः दृश्यन्ते । ब्राह्मणाः क्षत्रियाश्च उपानद्विपणीं विस्तारयन्ति । चर्मकाराश्च अध्यापयन्तः शासनमधितिष्ठन्तश्च सन्ति ।

एतेन च वृत्तिविपर्ययेण अनुभवराहित्यात् समाज्य महती हानिः सम्पद्यते ।

"स्वधर्मे निधनं श्रेयः परधर्मो भयावहः" इति च गीतासु स्मर्यते[1]।

"स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति च[2]।

स्व जातीयोचितकर्मसु तु शैशवादेव अभ्यासः पितृपितामहपरम्परागतः संस्कारोऽपि स्वजात्युचितकर्मसु प्रावीण्यहेतुर्भवति। देशे विदेशे च तत्तज्जातीयानां पुंसां तत्तत्कर्मसु जन्म-स्वभाव-सिद्धम्। नैपुण्यं नापलपितुं शक्यते। यथा— रूसदेशे कज्जाकसैनिकानां शौर्यम्। भारते च तैलंगानां सिक्खाभिधानां च शौर्यम्। कायस्थानां च जातिस्वभाव सिद्धं गणनाकौशलम् प्रबन्धकौशलञ्च। वणिजां व्यापार-कौशलञ्च जातिस्वभावसिद्धम् इत्युक्तं प्राक्। तस्मात्तत्तत्कर्मसु स्वस्वजात्युचितेषु परमनैपुण्यलाभाय जातिसंरक्षणम् आवश्यकम् प्रतिभाति इति।

---

## ६—अथ ग्रन्थोपसंहारः।

तदेवमत्र ग्रन्थे "नित्यमेकमनेकानुगतं सामान्यम्" इत्यकल्पितसामान्यलक्षणम् सिद्धान्ततया निर्दिष्टम्। कल्पिताकल्पितभेदेन जाति द्वैविध्यम् च प्रदर्शितम्। जातेर्नित्यत्वविभुत्वाभ्याम् सर्वव्यक्तिसम्बंधेऽपि अभिव्यक्ताया एव कार्योपयोगित्वेन स्वाश्रयादन्यत्र कार्योपयोगाभावः तस्याः समर्थितः। चित्रे अभिव्यक्तावपि न तत्र तस्याः कार्यपरत्वम् इत्यपि प्रदर्शितम्।

कल्पितजात्या सामयिको व्यवहारः, अकल्पितजात्या तु अनादिकालप्रवृत्तो लौकिको वैदिकश्च व्यवहारः सम्पाद्यते इति च दर्शितम्। शब्दजात्यर्थजात्योः प्रत्ययक्रमश्च सयुक्तिकम् दर्शितः। एकव्यक्तिविनाशे च व्यक्त्यन्तरे वर्तमाना जातिः व्यक्त्यन्तरजन्मनि जन्मकाले एव तेन सह सम्बध्यते इति अभ्युपगमोऽपि विशदीकृतः। विविधानि जातिविषये

---

१. ( गी० ३, श्लो० ३५ ) ॥ इति ॥
२. ( गी० अ० १८, श्लो० ४६ ) ॥ इति ॥

शास्त्रमतानि प्रदर्श्य वैयाकरणसिद्धान्तः तद् विषये सम्यक् समर्थितः। जातिरनेका इति नानाशास्त्रवादान् प्रत्याख्याय ब्रह्मस्य सत्तैव एका जातिः इति अद्वैतवादिसम्मतं वैयाकरणमतमत्र सिद्धान्ततया दर्शितम्। जातेः प्रतिनिधिर्नास्ति अतएव अजाभावे मेषो नालभ्यते। मीमांसानिर्णयोऽपि प्रसङ्गेन दर्शितः।

आधुनिकानां भौतिकविज्ञानवादिनां मतानुसारेण जातिवादं प्रत्याख्याय, स्वमनीषया तं समर्थ्य, जातिसंरक्षणस्य उपयोगोऽपि सोपपत्तिकं दर्शितः।

सूत्र वार्तिक—भाष्याणि समालम्ब्य "व्याकरणशास्त्रदृष्ट्या जातिस्वरूपविमर्शः" अस्य निबन्धस्य मुख्यो विषयः महता संरम्भेण प्रदर्शितः।

इति महदस्य निबन्धस्य वैशिष्ट्यम्। वाक्यपदीये च दर्शिताः प्रायेण सर्वेऽपि जातिसम्बद्धाः विचाराः साम्प्रतं लोकमुपागताः अत्र स्थाने स्थाने प्रसङ्गतः उपन्यस्ताः नवत्वमिव भजन्ते।

इत्येवमुदाहृता इमे एव विषयाः काममस्य निबन्धस्य गौरवं वर्धयन्ति। तथापि सन्ति अन्येऽपि बहवो विषया अत्र उपनिबद्धाः यैरस्य निबन्धस्य उपयोगः सुतरां लक्षितो भवति।

इत्येवमत्र मयका परमश्रमेण श्रद्धावनम्रमतिना विषयान् निबद्धान्। आर्या विचार्य कृपया स्खलितं मदीयं संशोधयन्त्विति कृताञ्जलिरद्य याचे॥

वेदाक्ष्यभ्रभुजाङ्किते शुभमये रौद्राभिधे वत्सरे,
आषाढे गुरुपूर्णिमा तिथिवरे शुक्रे शुभे वासरे।
पूज्यश्रीगुरुपादपाननुगता वल्ली मदीया मतिः,
जात्याकारविचारपुष्पकलिता भूयान्मुदे धीमताम्॥ २॥

—ः शुभं भूयात् ः—

॥ इति पञ्चमोऽध्यायः ॥

# परिशिष्टम्

## ( क ) सङ्केताक्षराणि

| | |
|---|---|
| १—मु० व्या० दुर्गादास टी० पृ० सं० | मुग्धबोधव्याकरणम् दुर्गादासकृत टीका पृष्ठ संख्या |
| २—पा० अ० अ०—पा० सू० | पाणिनीया अष्टाध्यायी अध्यायः पादः सूत्रम् |
| ३—महा० भा० अ० पा० आ० | महाभाष्ये अध्यायः पाः आह्निकः |
| ४—म०भा० प्र० अ० पा० आ० | महाभाष्यम् प्रदीप सहितम् अध्यायः पादः आह्निकः |
| ५—ल० म० श० नि० प्र० | लघुमञ्जूषा शक्तिनिरूपणप्रकरणम् |
| ६—त० स० न्या० बो० टी० | तर्कसंग्रहः न्यायबोधिनीटीकापेतः |
| ७—त० सं० पद० टी० | तर्कसंग्रहः पदकृत्यटीकोपेतः । |
| ८—म० भा० अ० पा० सू० वा० | महाभाष्ये अध्यायः पादसूत्रं वार्तिकम् |
| ९—न्या० द० अ० पा० आ० सू० | न्यायदर्शनम् अध्यायः पादः आह्निकः सूत्रम् |
| १०—न्या० सू० वि० अ० सू० | न्या सूत्रं विवरणम् अध्यायः सूत्रम् |
| ११—न्या० सि० मु० टी० प्र० ख० का० सा० नि० प्र० | न्यायसिद्धान्तमुक्तावली, प्रत्यक्ष खण्डम् किरणावलीटीका, सामान्यनिरूपणप्रकरणे कारिका |
| १२—वै० द०प्र०पा०भा०पृ०सं० | वैशेषिकदर्शने प्रशस्तपादभाष्ये पृष्ठ संख्या |
| १३—न्या० सी० मु० रा० टी० | न्यायसिद्धान्तमुक्तावली रामरुद्रीटीकोपेता |
| १४—मा० मे० जा० प्र० पृ० सं० | मानमेयोदये जातिनिरूपणप्रकरणे पृष्ठ संख्या |
| १५—अ० सि० प्र० प० प्र० मि० नि० पृ० सं० | अद्वैतसिद्धौ प्रथमपरिच्छेदे प्रथममिथ्यात्व निरूपणे पृष्ठसंख्या |
| १६—वै० द० प्र० पा० भा० द्र० नि० उ० प्र० पृ० सं० | वैशेषिक दर्शने प्रशस्तपादभाष्ये द्रव्यनिरूपण-ग्रन्थे उद्देश्यप्रकरणे पृष्ठसंख्या |
| १७—प्र० पा० भा० सा० प० नि० पृ० सं० | प्रशस्तपादभाष्ये सामान्यपदार्थनिरूपणे पृष्ठ संख्या |
| १८—प्रमा० वा० परि० | प्रमाणवार्तिके परिभाषा |
| १९—यजु० वा० सं० | यजुर्वेदः वाजसनेयसंहिता |

| | |
|---|---|
| २०—यजु० | यजुर्वेदः |
| २१—शत० निघ० | शतपथब्राह्मणम् निघण्टुसहितम् |
| २२—ऋक् सं० | ऋग्वेद संहिता |
| २३—यो० सा० | योगदर्शनं साधनपादः |
| २४—गी० | गीता |
| २५—भ० पु० ब्रा० पर्व | भविष्यपुराणम् ब्राह्मपर्व |
| २६—म० भा० व० प० | महाभारतम् वन पर्व |
| २७—मनु० | मनुस्मृतिः |
| २८—याज्ञ० स्मृ० | याज्ञवल्क्यस्मृतिः |
| २९—महा० अनु० | महाभारते अनुशासनपर्व |
| ३०—म० भा० शा० प० | महाभारते शान्तिपर्व । |
| ३१—अ० स्मृ० | अत्रिस्मृतिः |
| ३२—भाग० | भागवतपुराणम् |
| ३३—अ० को० का० | अमरकोषः काण्डम् |
| ३४—ब्र० सू० शा०भा०अ०पा०सू० | ब्रह्मसूत्रम् शाङ्करभाष्यम् अध्यायः पादः सूत्रम् |
| ३५—सां० प्र० भा० | सांख्यप्रवचनभाष्यम् |
| ३६—पा० यो० द० तृ० पा० सू० पृ० सं० | पातञ्जलयोगदर्शनम् तृतीयपादे सूत्रम् पृष्ठसंख्या |
| ३७—पञ्चास्तिकायः गा० | पञ्चास्तिकायः गाथा । |
| ३८—वै० भू० सा० स्फो० नि० प्र० का० | वैयाकरणभूषणसारे स्फोटनिरूपणप्रकरणे कारिका |
| ३९—सर्वदर्श० सं० चा० द० | सर्वदर्शनसंग्रहः चार्वाकदर्शनम् |
| ४०—वा० प० तृ० का० जा० स० | वाक्यपदीये तृतीये काण्डे जातिसमुद्देशे |
| ४१—वा० प० तृ० का० जा० स० हे० रा० टी० | वाक्यपदीये तृतीय काण्डे जातिसमुद्देशे हेलाराजीय-टीकायाम् |
| ४२—वै० भू० सा० ना० नि० प्र० का० | वैयाकरणभूषणसारे नामार्थनिरूपणप्रकरणे कारिकायाम् |
| ४३—वा० प० ब्र० का | वाक्यपदीये ब्रह्मकाण्डे |
| ४४—त० सं० टी० न्या० बो० प्र० ख० गुण० ल० प्र० | तर्कसंग्रहः टीका न्यायबोधिनीप्रत्यक्षखण्डे गुणलक्षणप्रकरणे |
| ४५—वै०क०भू०सा०श०नि०का० | वैयाकरणभूषणसारे शक्तिनिरूपणकारिकायाम् |
| ४६—श्वेताश्वतरोपनिषद् अ०मं०सं० | श्वेताश्वतरोपनिषद् अध्यायः मन्त्रसंख्या |

| | |
|---|---|
| ४७—म० भा० पस्पशा० अ० पा० पृ० सं० | महाभाष्यम् पस्पशाह्निकम् अध्यायः पादः आह्निक। पृष्ठ संख्या |
| ४८—म० भा० अ० पा० सू० वा | महाभाष्यम् अध्याय। पादः सूत्रम् वार्तिकम् |
| ४९—वा० प० तृ० का० साधन स० | वाक्यपदीये तृतीय काण्डे साधनसमुद्देशे |
| ५०—शब्द० श० प्र० का० | शब्दशक्तिप्रकाशिका कारिका |
| ५१—शा० स्था० अ० | शारीरिकं स्थानम् अध्यायः |
| ५२—च० सं० सू० स्था० अ० चक्र० टी० पृ० सं० | चरकसंहितायाम् स्थानसूत्रम् अध्यायः चक्रपाणि टीकायाम् |

---

## ख—सहायकग्रन्थानां सूची

| | |
|---|---|
| १—पाणिनीया अष्टाध्यायी | आचार्यपाणिनिविरचिता। |
| २—व्याकरणमहाभाष्यम् प्रदीपोद्योत-सहितम् ( सम्पूर्णम् ) | शेषावतारभगवत्पतञ्जलिकृतम् |
| ३—मुग्धबोधव्याकरणम् | वोपदेवेनरचितम् |
| ४—संस्कृतव्याकरणशास्त्रस्येतिहासः भ गः १, २ | श्री युधिष्ठिर मीमांसकविरचितः |
| ५—संस्कृतसाहित्येतिहासः | पं० श्री बलदेवोपाध्यायकृतः |
| ६—सिद्धान्तकौमुदी तत्वबोधिनीबालमनोरमाटीका सहिता | श्री भट्टोजिदीक्षितकृता। |
| ७—तर्कसंग्रहः न्यायबोधिनीपदकृत्यसहितः | श्रीमदन्नंभट्टविरचितः |
| ८—न्यायसिद्धान्तमुक्तावली किरणावली रामरुद्रीसहिता | श्री विश्वनाथभट्टाचार्यकृता |
| ९—लघुशब्देन्दुशेखरः | श्री नागेशभट्ट कृतः |
| १०—वैयाकरणसिद्धान्तलघुमञ्जूषा | श्री नागेशभट्टविरचिता |
| ११—वैशेषिकदर्शनम् प्रशस्तपादभाष्यसहितम् | श्रीमदुदयनाचार्यकृतम् |
| १२—प्रमाणवार्त्तिकम् | |
| १३—मानमेयोदयः | |
| १४—यमस्मृतिः | |
| १५—यजुर्वेदः | |
| १६—शतपथब्राह्मणम् | |
| १७—ऋग्वेदसंहिता | |

| | |
|---|---|
| १८—मनुस्मृतिः | महर्षिमनुविरचिता |
| १९—योगदर्शनम् | श्रीभगवत्पतञ्जलिरचितम् |
| २०—महाभारतम् | श्रीवेदव्यासरचितम् |
| २१—कृष्णयजुर्वेदः | |
| २२—श्रीमद्भागवत महापुराणम् | श्रीवेदव्यासकृतम् |
| २३—ब्रह्मपुराणम् | श्रीवेदव्यासकृतम् |
| २४—शुक्रनीतिः | |
| २५—अमरकोशः | अमरसिंहविरचितः |
| २६—ब्रह्मसूत्रं शाङ्करभाष्यसहितम् | |
| २७—सांख्यप्रवचनभाष्यम् | |
| २८—पञ्चास्तिकायः ( गाथा ) | |
| २९—वैयाकरणभूषणसारः | श्रीकोण्डभट्टेन लिखितः |
| ३०— वाक्यपदीयम् वृषभदेवीय हेलाराजीय टीकोपेतम् ( सम्पूर्णम् ) | श्रीभर्तृहरिकृतम् |
| ३१—प्रौढमनोरमा ( शब्दरत्नसहिता ) | श्रीभट्टोजिदीक्षितेन विरचिता |
| ३२—श्वेताश्वतरोपनिषत् | |
| ३३—शब्दशक्तिप्रकाशिका | श्रीजगदीशतर्कालङ्कारनिर्मिता |
| ३४—चरकसंहिताचक्रपाणिटीकासहिता शारीरिकम् स्थानम् | |
| ३५—अपोहसिद्धिः ( बौद्धदर्शनम् ) | |
| ३६—प्रक्रियाकौमुदी | |
| ३७—काशिका | वामनजयादित्याभ्यां विरचिता |
| ३८—शब्दकल्पद्रुमः | स्यार-राजा-राधाकान्त देव बहादुरेण विरचितः |
| ३९—पाणिनिकालीन भारतवर्षम् | श्रीवासुदेवशरणअग्रवालकृतम् |
| ४०—वाचस्पत्यम् | श्रीतारानाथतर्कवाचस्पतिकृतम् |
| ४१—मीमांसादर्शनम् | श्रीमहामुनिजैमिनिकृतम् |

४२—पत्रिका :—

( क ) सरस्वती-सुषमा ।

( ख ) विश्वभारती ।

———